BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NO. 1344.




# श्रीसूरिसर्वस्वम् ।

# SRI SURISARVASVAM.

BY

SRI GOVINDA KAVIBHUSANA SAMANTAROY

EDITED BY

SRI JAGANNATH MISRA

*Teacher of Logic, Sanskrit School, Puri.*

FASCICULUS I.

Calcutta.

PRINTED BY ABDUL GOFFUR AT THE NEW BRITANNIA PRESS

*78, Amherst Street.*

AND PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL, 1, PARK STREET.

1912.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,

11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO

HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

### BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | Rs. | A. |
|---|---|---|
| Advaitachinta Kaustubha, Fasc. 1-3 at As. 10 each ... | 1 | 14 |
| Aitareya Brahmana, Vol. I. Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III. Fasc. 1-5 Vol. IV, Fasc. 1-8 at As. 10 each ... | 14 | 6 |
| Aitareyalocana ... ... ... ... | 2 | 0 |
| Amarakosha, Fasc. I ... ... ... ... | 2 | 0 |
| *Anu Bhashya, Fasc. 2-5 at As. 10 each ... ... | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1-2 at As. 10 ... | 1 | 4 |
| Astasahasrika Prajnaparamita, Fasc. 1-6 at As. 10 each ... | 3 | 12 |
| Atmatattvaviveka, Fasc. I ... ... ... | 0 | 10 |
| Acvavaidyaka, Fasc. 1-5 at As. 10 each ... ... | 3 | 2 |
| Avadana Kalpalata, (Sans. and Tibetan) Vol I. Fasc. 1-10 Vol. II, Fasc. 1-10 at Re. 1 each ... ... | 20 | 0 |
| Balam Bhatti, Vol. I Fasc. 1-2, Vol. II, Fasc. 1, at As. 10 each | 1 | 14 |
| Baudhayana Srauta Sutra, Fasc. 1-3; Vol. II, Fasc. 1-5 at As. 10 each ... ... ... ... | 5 | 0 |
| Bhasavritty ... ... ... ... ... | 0 | 10 |
| Bhatta Dipika, Vol. I, Fasc. 1-6; Vol. II, Fasc. 1, at As. 10 each... ... ... ... ... | 4 | 6 |
| Bauddhastotrasangraha ... ... ... ... | 2 | 0 |
| Brhaddevata, Fasc. 1-4 at As. 10 each ... ... ... | 2 | 8 |
| Brhaddharma Purana, Fasc. 1-6 at As. 10 each ... ... | 3 | 12 |
| Bodhicaryavatara of Cantideva, Fasc. 1-6 at As. 10 each ... | 3 | 12 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... ... | 1 | 14 |
| Catadusani, Fasc. 1-2 at As. 10 each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Book and MSS., Fasc. 1-4 at Rs. 2 each | 8 | 0 |
| * Catapatha Brahmana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 Vol. III. Fasc. 1-7; Vol. V, Fasc. 1-4 at As. 10 each ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 at Re. 1-4 each ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 at As. 10 ... | 3 | 2 |
| Ditto Vol. IX, Fasc. 1-2 ... ... | 1 | 4 |
| Catasahasrika-prajnaparamita, Part I, Fasc. 1-17 at As. 10 each | 10 | 10 |
| *Caturvarga Chintamani, Vol. II, Fasc. 1-25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1-10; Vol. IV, Fasc. 1-6 at As. 10 each... ... ... ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, at Re. 1-4 each ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 9-10 at As. 10 ... | 1 | 4 |

# सूरिसर्वस्वम् ।

## प्रथमः संग्रहः ।

श्रीगणेशाय नमः ।

अविघ्नमस्तु ।

ब्रह्मेन्द्रलक्ष्मीनवनव्यधामा सत्सच्चिदानन्दपवित्रनामा ।
व्यक्तिर्जगत् काचिदशेषसेव्या निर्व्याजसव्याहतशक्तिरव्यात् ॥ १ ॥

यत्पादपाथोजरजोऽभिषिक्तः सर्व्वाशुभं हन्ति जनो जगत्याम् ।
प्राप्नोति चानन्दमयं पुमांसं तमीश्वरं श्रीगुरुदेवमीडे ॥ २ ॥

आसीत् श्रीविश्वनाथः प्रवरतरभरद्वाजवंशावतंसः
पुत्रान्तेवासिपौत्रानुजहृदयमहासंशयध्वान्तहंसः ।
देवानां मन्त्रयन्त्रार्च्चनविधिकुशलः कान्तिमत्शान्तमूर्त्तिः
श्रीमान् सामन्तरायेत्यधिपदपदवीमास्थितः ख्यातकीर्त्तिः ॥ ३ ॥

तदात्मजन्मा किल रामशर्म्मा प्रीत्यै हरेस्त्यक्तसमस्तकर्म्मा ।
गृहाश्रमस्थोऽपि महाविरक्तः सतां मतः संसदि कृष्णभक्तः ॥ ४ ॥

तत्पुत्रोऽखिलगद्यपद्यरचनाचातुर्य्यचिन्तामणिः
शान्तात्मागमशास्त्रतत्त्वविदुषां संसत्सदामग्रणीः ।
भूभृद्भूसुरसज्जनेष्टसुहृदां प्रेमप्रमोदास्पदं
गोविन्दः कविभूषणो विजयते सामन्तरायोत्तरः ॥ ५ ॥

ग्रन्थस्तेनारभ्यते सभ्यचेतःसन्तोषार्थं सूरिसर्व्वस्वनामा ।
सर्व्वार्थानां साधने साधकानां साक्षात्क्ष्मायां कल्पवृक्षानुकल्पः ॥६॥
क्वचित् स्ववाक्यैः क्वचिदार्षवाक्यैरिह क्वचित् पौरुषतन्त्रवाक्यैः ।
संगृह्यतेऽस्मिन् किल कर्म्मयोगः सन्तोषभाजस्त्विह सन्तु सन्तः ॥७॥
योगास्त्रयः समुदिता मुनिभिः पुराणे
ज्ञानं क्रिया तदनु भक्तिरिति प्रसिद्धाः ।
तेषु क्रियैव सुगमा सुखसाध्यभूत्या
ज्ञानं च भक्तिमुभयं जनयत्यसौ यत् ॥ ८ ॥
यत्कर्मणेत्यादि जगाद वाक्यं गीतासु साक्षाद्दशमे च कृष्णः ।
तमेतमित्यादिरिह श्रुतिश्च तदाह तस्मादुभयं प्रमाणम् ॥ ९ ॥
श्रीशारदातिलकतान्त्रिकगौतमीय
श्रीपञ्चरात्रमुखतन्त्रमवेक्ष्य वृद्धाः ।
सिद्धा हि सिद्धिमतुलां च यथापुरग्रे
तांकर्मयोगपदवीमविशङ्क्य वक्ष्ये ॥ १० ॥
कर्म स्मृतं चेन्द्रियवृत्तिसाध्यं सकारकं हेतुविशेषपूर्व्वम्
तत् षड्विधं सर्व्वपुराणसिद्धं ज्ञेयं क्रमात् श्रेष्ठतरं यथावत् ॥११॥
प्रतिषिद्धं तथा प्रायश्चित्तं नैमित्तिकं पुनः
काम्यं नित्यमुपास्यञ्च वरिष्ठं ह्युत्तरोत्तरम् ॥ १२ ॥
प्रतिषिद्धं तु नरकाद्यनिष्टफलसाधनं
सर्व्वतन्त्रेण यत्कार्य्यं गोविप्रहननादिकम् ॥ १३ ॥
प्रायश्चित्तं कृते पापे यत् पापक्षयसाधनम् ।
चान्द्रायणप्रजापत्यादिकुशलादि व्रतं मतम् ॥ १४ ॥

काले दैववशात् प्राप्तं कर्म नैमित्तिकं विदुः ।
जातेऽपत्ये जातकर्माद्युक्तनान्दीमुखादिकम् ॥ १५ ॥
काम्यं मनोऽभिलाषेण यत् स्वर्गादीष्टसाधनम् ।
अग्निष्टोमादिकं काम्यश्राद्धदेवव्रतादिकम् ॥ १६ ॥
अकृतौ प्रत्यवायस्योपादानं नित्यमीरितम् ।
प्रायः फलाशावर्ज्जितं यत् सन्ध्यावन्दनादिकम् ॥ १७ ॥
शुद्धसत्त्वेन मनसा वासुदेवादिमूर्त्तिषु ।
उपासनं मतं भक्त्याराधनं परमात्मनः ॥ १८ ॥
विना निषिद्धं सर्व्वाणि कर्त्तव्यान्येव कामिना ।
नित्यं चोपासनं कार्य्यं निष्कामेन मुमुक्षुणा ॥ १९ ॥
न त्याज्यं नित्यकर्मेदं त्यागिनाऽपि कदाचन ।
प्रतिसिद्धान्तितं श्रीमद्गीतासु हरिणा स्वयम् ॥ २० ॥
यज्ञदानतपः कर्म न त्याज्यं कार्य्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ २१ ॥
यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ २२ ॥
तस्मादसक्तः कुलदेवभक्तः कृत्येषु शक्तः श्रुतिवाक्यरक्तः ।
उपासनं नित्यकृतेन कुर्वन् नरः परां सिद्धिमुपैत्यवश्यम् ॥ २३ ॥
सकामैर्निष्कामैः परमपुरुषार्थार्थिभिरपि
स्वयं सर्वैः सेव्यः स इह भगवान्नन्दतनयः ।
तथाऽसौ भक्तानां विविधफलदानाय विविधं
स्वरूपं संधत्ते हरिहरशिवाम्बेयरविभिः ॥ २४ ॥

सर्वागमानां मतमेतदेव सर्वार्थसिद्ध्यर्थमुपासकानाम् ।
गुरुप्रसादादवगम्य तत्त्वं पश्चाऽमुमिष्टं मनुजा लभन्ते ॥ ३२ ॥
रविर्यथा गाढ़तमं तमश्चयं निहन्ति तेजोभिरघं यथा हविः ।
तथा गुरुर्वागमृतैरबोधजं तमो निरस्यत्यखिलं प्रकाशयेत् ॥३३॥
अदीक्षितस्यास्ति विधिर्न कश्चित् यद्यत् कृतं तेन हि निष्फलं तत् ।
तदन्नपानं मलमूत्रतुल्यं न मुच्यते प्रेततया मृतोऽसौ ॥ ३४ ॥
तस्येक्षणाद्दुष्कृतमाशु पुण्यं संचिन्तनात्स्नानमसौति नाशम् ।
सम्भाषणाद्दाकृतमङ्गसङ्गात् सर्वं नित्रामादपि भूरशुद्धा ॥ ३५ ॥
दीक्षाहीनः पशुतुल्यो मनुष्यो यद्यप्येष श्रीमतामग्रगण्यः ।
सूतैर्नेद्रा दारुजा पुत्तलीव विज्ञानव्यग्रेतमानोऽप्यचेष्टः ॥ ३६ ॥
तस्मात् प्रायश्चित्तनैमित्तिकादि
श्रौतं स्मार्त्तं कर्म वा धर्मशीलः ।
कुर्य्यात् प्रागाचार्य्यतः प्राप्य दीक्षां
नाहीं साक्षादन्यथा देवताऽपि ॥ ३७ ॥
दिव्यज्ञानं दीयते दीक्षया यत्
पापं यस्याः क्षीयते साऽन्वितार्था ।
दीक्षा प्रोक्ता वैदिकी तान्त्रिकी च
द्वेधा नृणामात्मसंशुद्धिहेतुः ॥ ३८ ॥
आदावाद्या गृह्यते देहशुद्धै स्वान्तःशुद्धै सेव्यते च द्वितीया ।
सापेक्षत्वादेवमन्योऽन्यमेते संसेव्येते ब्रह्मराजन्यवैश्यैः ॥ ३९ ॥
जन्मादिचूड़ावधिकर्मजातैः सुसंस्कृतस्याथ शिशोः स्वकाले ।
गायत्र्युपादानकरी क्रिया या सावित्रिकी नाम मता हि दीक्षा ॥४०॥

तन्त्रोदितानां महतां मनूनां तदर्थतत्कल्पजुषां विधीनाम् ।
हुतादिपूर्वं ग्रहणं यतः स्यात् शिष्यस्य दीक्षा खलु तान्त्रिकी सा ॥४१

सत्ये सा श्रुतिमार्गगा तदनु च त्रेतायुगे स्मार्त्तिकी
भूयोद्वापरके पुराणविहिता ज्ञेयागमोक्ता कलौ ।
स्यात् पञ्चायतनी च केवलमयी साप्यागमोक्ता द्विधा
पञ्चानामधिकारिणां प्रथमका * सेव्येत भक्तैः † परा ॥ ४२ ॥

केवला भवति शाम्भवी पुनर्वैष्णवीति फलभेदतो द्विधा ।
शम्भुशक्तिरविविघ्नसेविनां शाम्भवी तदितरस्य वैष्णवी ॥ ४३ ॥

प्रत्येक मेताः स्युरथो चतुर्विधा विधानभेदादुपदेशभेदतः ।
क्रियावती ‡ वर्णमयी कलावती पुनस्तथा वेधमयीति च क्रमात् ॥४४

§ प्रधानपुरुषात्मके वपुषि तन्मयान्यक्षरा-
ण्युदीर्य्यविधिवन्यसन्नथ विलोमतः संहरेत् ।
नियोज्य परमे शिवे सपदि तानि सृष्ट्या न्यसेत्
स्वशिष्यवपुषोरयेन्मनुमियं च वर्णात्मिका ॥ ४५ ॥

पादाग्रादिषु पाञ्चभौतिककला ध्यात्वा निवृत्त्यादिकाः
शिष्याङ्गेषु च संहृतिक्रमवशात्तां वेधयित्वाखिलम् ।
संहृत्याथ शिवे शिवाय शिशवे दद्यात् स्वविद्यां कला-
वत्येषा कथिता, पुराणमुनिभिः सर्वार्थचिन्तामणिः ॥ ४६ ॥

---

* प्रथमजा इति पाठान्तरम् ।

† सेव्यैकभक्तैः परा इतिपाठान्तरम् ।

‡ क्रियावती लक्षणं विभिन्नस्थानादानीतेषु पुस्तकेषु नोपलभ्यते ।

§ क्रियावत्याः सकलसांप्रदायिकसुलभप्रयोगत्वेन प्रसिद्धतया तल्लक्षणमनुक्त-मितिचिन्तनीयम् ।

आधाराद्यखिलाम्बुजान्तरगतां ध्यात्वात्मशक्तिं तया
चक्रार्णान् क्रमशो नियोज्य सकलं ब्रह्मादिकं संहरेत् ।
सौषुम्नाध्वनि शिष्यवर्त्मनि मनं तं दीक्षयित्वा दिशेत्
इत्थंवेधमयीरिताऽतिसुखदा संपत्प्रदा भूतले ॥ ४७ ॥
प्रत्येकतस्ता विविधा भवन्ति हि व्यस्ताः समस्ता इति गुर्वनुज्ञया ।
ऐकान्तभक्त्यैकसुरस्य सेवया तथैकबुद्ध्या सुरपञ्चकस्य ॥ ४८ ॥
त्रैवर्णिका आस्वधिकारिणः स्युर्यस्मादिमाः पूजनहोमसाध्याः ।
तत्रापि न ब्राह्मणबन्धवश्च तत्राधमाश्चान्त्यजदारभाजः ॥ ४९ ॥
अथेतरेषामपि पारलौकिकी प्रशस्तदीक्षाऽस्ति पुराणसम्मता ।
साचाक्षुषी स्पर्शवती च वाङ्मयी चतुर्विधा ज्ञानमयीत्यभीष्टदा ॥५०॥
निमीलिते नेत्रयुगेऽनवद्यं स्फुरत्परं तत्त्वमुपास्य मत्या ।
तेनात्मशिष्यं नियतं निरीक्ष्य विद्यां दिशेदक्षिणि चाक्षुषीयम् ॥५१॥
निबद्ध्य हृद्यञ्जलिमान्तरीयं तेजः समावाह्य समर्च्य तत्र ।
तेन स्पृशन्नाशिरसः स्वशिष्यं विद्यां दिशेत् स्पर्शवती मतेयम् ॥ ५२ ॥
चित्तं समाधाय परात्मतत्त्वे वदेति संबोध्य पुरःस्थशिष्यम् ।
वाचादिशेदधुत्रमन्त्रवर्णान् व्यक्तं च दूरादिति वाङ्मयी स्यात् ॥ ५३ ॥
प्रागेकभक्तं गुरुरेकभक्तं शिष्यं पुरःसंस्थ मनात्मभिन्नम् ।
विभाव्य विज्ञानबलेन विद्यां विभावयेज्ज्ञानमयीयमुक्ता ॥ ५४ ॥
शालामण्डपकुण्डमण्डलहृतेरेताविधेया यत
स्तस्माद्वास्तुनिरूपणं तनुमहे सत्शिल्पिशास्त्रोदितम् ।
येनोर्वीषु चतुर्विधासु विधिवज्ज्ञात्वा शुभं चाशुभं
कुर्वीतात्महिताय वेश्मघटनां वास्त्वर्हणापूर्व्वकम् ॥ ५५ ॥

ब्राह्मी श्वेता कषायास्त्ववदमलजला हव्यगन्धा सुवृत्ता
क्षात्त्री रक्तातु मृत्सा खरजलबहुला रक्तगन्धा युगास्रा ।
वैश्या पीतातितिक्ता कटुसलिलवती चारगन्धा त्रिकोणा
शूद्राभूमिश्च कृष्णा सुमधुरमृदपापूतिगन्धातिनम्रा ॥ ५६ ॥
हिता स्ववर्णस्य मता स्वभूमिस्तथाद्वितीयाऽपि हिता त्रयाणाम् ।
अन्त्यस्य नाद्या प्रथमस्य नान्त्या हितेति तत्त्वविदो वदन्ति ॥५७॥
अज्ञाते भूविवेके करमितमवनौ तत्र निर्माय गर्त्तं
लिप्तं गुप्तं समन्तात् स दश घृतमयान् दिक्षु दीपांस्तदन्तः ।
प्रज्वाल्य प्राच्यवाचीवरुणधनददिग्दीप्तितोऽनुक्रमेण
क्षौणीं भूदेव भूपोरुजचरणभुवां भूतिदां चावगच्छेत् ॥ ५८ ॥
गृह्णीयात्तत्र वास्तु विमततरुतुषाङ्गारभस्मास्थिशून्य-
प्राचीनं प्रागुदीचिप्रवणमुपजलं शस्तवृत्तैः परीतम् ।
क्रव्यादक्रूरजन्तूज्झितमथ कपिले गोयुगे योजितेन
क्षिप्रं कृष्टाविकृत्वस्तदुपरि च तिलान्निर्व्वपेत् लाङ्गलेन ॥ ५९ ॥
त्रिभिः पञ्चभिः सप्तभिः सार्द्धषड्भि-
र्दिनैरङ्कुरे तेषु जाते चतुर्णाम् ।
द्विजक्षत्त्रवैश्यान्त्यजानां प्रमोदं
परिज्ञाय गाश्चारयेत्तत्र पश्चात् ॥ ६० ॥
तासां खुराग्रखननैर्मलमूत्रपातैः
संशोधिते क्षितितले विनिखन्य शङ्कुं ।
तस्याग्रलग्नसुदृढायतसूक्ष्मरज्ज्वा
संभ्राम्य मण्डलतया विरचय्य रेखाम् ॥ ६१ ॥

सूर्योदये पतति यत्र समेऽह्नि शङ्को-
श्छाया प्रतीच्यभिमतास्तमये च पूर्वा ।
याम्योत्तरे तदुभयोः परिमाय मध्ये
तन्मध्यतो विदिगिति स्वधियाऽवगच्छेत् ॥ ६२ ॥
तत्राष्टदिक्षु चतुरस्रतयाऽष्टशङ्कून्
संस्थाप्य सूत्रपतनेन विभज्य वास्तुम् ।
पूजार्घपूर्वकशुभस्थगनाय तत्र
संचिन्तयेदथ स वास्तुनि वास्तुनागम् ॥ ६३ ॥
भोगो ग्रीव उरःप्रदेश उदरं नाभी गुदं जानु तत्
पुच्छं चेति समानतो वसुविधैरङ्गैर्विभक्तेन यः ।
क्रान्त्वा वास्तुहरित्रयं स्ववपुषा वामेन पार्श्वेन वै
शेते सर्वदिनं स दक्षिणतया मन्दं परिक्रामति ॥ ६४ ॥
यो भाद्रतः प्रतिपदादिदिनैर्नवत्या
प्राचीं प्रयाति शिवदिक्क्रमत स्त्रिमासैः ।
मार्गादिभिर्यमदिशं त्वथ फाल्गुनाद्यैः
प्राचेतसीं शशिदिशं खलु शुक्रमुख्यैः ॥ ६५ ॥
तस्योरस्येव गर्भं क्रिमुदरभुवि वा निम्नमापाद्यसद्य-
स्तत्पश्चाद्दक्षिणे वा मृदुमृदि सुधमे लिप्तभूमिप्रदेशे ।
दुर्वागन्धप्रसूनाक्षतवसनहविःपूर्णकुम्भाम्बुपात्र-
क्षीरक्षौद्रादिपञ्चामृतनिखिलवलिद्रव्यमासादयेच्च ॥ ६६ ॥
वैशाखाषाढ़युग्मोर्जयुगसहतपस्येषु मासु द्वितीया
हस्ताष्टम्यद्रिसंख्यामम शरतिथिषु ज्ञामरेज्योशनःसु ।

पुष्येन्द्वीन्द्रार्कचित्रान्त्यभहरिधनपैत्राजमैत्रोत्तरासु
ग्राम्ये लग्ने स्थिरांशे निखिलगगनगैर्लचिते शास्त्रशुद्धैः ॥ ६७ ॥
रवीन्दुताराद्यनुकूलवासरे समारभेतार्च्चनमण्डपक्रियाम् ।
नदत्सु तूर्य्येषु वदत्सु नैगमं वचः पवित्रेषु कलं द्विजन्मसु ॥ ६८ ॥
वेद्यन्तरे पञ्चसरोजमण्डले निधाय तद्वारुणकुम्भपञ्चकम् ।
तत्पश्चिमे विस्तरवास्तुमण्डलं तदुत्तरे स्थण्डिलमेकमाचरेत् ॥६८॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्वस्वे ग्रन्थमुखनिबन्धनानूदितदीक्षास्वरूपकथनं नाम प्रथमः संग्रहः ॥ ० ॥

पुरैक आसीत् किल वास्तुनामा महासुरः शत्रुजिदुग्रधामा ।
विधिर्द्विपञ्चाशदमर्त्त्यवीरैर्हत्वा समास्थाय समं तमास्ते ॥ १ ॥
अतस्ते वलिभिः पूर्वं पूजनीयाः शुभार्थिभिः ।
अन्यथा विघ्नभीतिःस्याद्वच्ये तन्मण्डलं यथा ॥ २ ॥
रेखाद्वादशकं विधाय रजसा प्रागुत्तराग्रायतं
जायन्ते शतमेकविंशतियुतं तस्मिन् पदानि क्रमात् ।
मध्येतेषु च पञ्चविंशतिपदैः पद्मं सितं सारुणं
कोणेषु द्विपदद्वयं द्वयमपि श्यामं सितं कल्पयेत् ॥ ३ ॥
पीतं पीठचतुष्टयं दशपदैर्दिक्षु त्रिकोष्ठैर्वहिः-
कोणेषु त्रिपदानि कृष्णरजसा व्याप्तानि चत्वारिच ।
तत्प्रागादिषु सप्तसप्तचपदान्याचार्य्य चित्राणित
द्वाह्ये दिक्षु विदिक्षु चाष्टजलजान्येवं भवेन्मण्डलं ॥ ४ ॥
द्विजैर्युतोयजमानः पुरस्तात् पुरोमुखःकलशेषु क्रमेण ।
गणेश्वरं प्रयजेत्तत्र मध्ये कुम्भे तद्वद्वरुणं पश्चिमस्थे ॥ ५ ॥

ग्रहानुत्तरे लोकपालान् पुरस्तात् पुराधीश्वरं दक्षिणे संयजेत।
समावाह्य पञ्चोपचारैर्यथावत् यजेताथवा पञ्च तानेककुम्भे॥ ६॥

संकल्प्य स्वस्तिवाच्य स्वयमृजुमथवाचार्य्यहस्तेन पूर्वं
ब्रह्माणं वस्त्रभूषादिभिरथ वरये हास्तुयागाय भूय:।
आवाह्यौँ भूर्भुव: स्वर्युतनिजनिजनाम्ना च ङेन्युतेन
ब्रह्माद्यान् वास्तुदेवान् मलयजसुमनोधूपदीपैर्यजेत॥ ७॥

पञ्चविंशतिपदे यजेद्विधिं साक्षताज्यचरुणाऽम्बमध्यत:।
दिक्षु तद्दशपदेषु पूर्वत: स्वार्घमाज्यसहितै: सुमोदकै:॥ ८॥

दक्षिणे सशशिचन्दनैर्विवस्वन्तमामगुड़पिष्टकै: पुन:।
मित्रमस्तदिशि सद्गुड़ोदनैरुत्तरेऽम्बपिशितैर्महीधरम्॥ ९॥

ईशानद्विपदद्वये गुड़युतैरापापवत्सौ क्रमा-
द्दर्भै: सद्दधिभिर्हुताशनदिशि क्षीरै: सिताज्यान्वितै:।
सावित्रं सवितारमेवमसुरेपीतोदनाज्योदनै:
शक्रं शक्रजयं च वायुदिशि सन्मांसान्नसाज्यामिषै:॥ १०॥

रुद्रं रुद्रजयं च तद्वद्धिरयो कोणत्रिकोष्ठोदित: *
काष्ठासु प्रति सप्तसप्तसु पदेष्वीशानकोणादनु।
ईशानप्रमुखान् सुरान् रदमितानुक्तैर्यजेद्वस्तुभि-
र्बाह्ये चाष्टसु पञ्चसप्तसु विदार्य्यादींश्च शर्व्वादिकान्॥ ११॥

ईशानं सघृताक्षतेन पयसा पर्जन्यमम्भोजिना-
पिष्ट्यापीतपताकया ससितया देवं जयन्तं तत:।

---

* त्रिकोष्ठादित: इति पाठो (ग) पुस्तकेदृश्यते स चात्रयुक्त इव प्रतिभाति।
(११श श्लोके)

शक्रं शर्करया सुरत्नचषकै धूम्रत्विषा भास्करं
सूक्ष्मोचेन च सत्य माज्यमिलितैर्गोधूमचूर्णैः पुनः ॥ १२ ॥
भृशं घृताक्तमांसान्नैराकाशं विहगामिषैः ।
अष्टौ क्रमेण पूर्वस्यां पूजयेत् क्रमतः सुरान् ॥ १३ ॥
क्षीरक्षौद्राज्यरक्तैरनिलमथसितैः पूषणं लाजपिण्डैः
स्वर्णाम्भोमृष्टपिष्टादिभिरपि वितथं क्षौद्रमांसैर्यमं च ।
गन्धर्वं सर्पिरन्नैर्विहगरसनया भृङ्गराजं हरिद्रा-
न्नैरोकोरक्तकं गोघृतसहितयवान्नैर्मृगं दक्षिणस्यां ॥ १४ ॥
तन्नैकृतं ससुरपक्षिरसन्नया च
दौवारिकं सतिलमण्डकदन्तकाष्ठैः ।
सुग्रीवमिक्षुरसमयुक्तयवैर्जलेन
पुष्पान्वितेन वरुणं त्वथ पुष्पदन्तम् ॥ १५ ॥
दर्भारुणाब्जपयमासुरमाज्यसक्थु-
पिण्डेन शोषमथ मद्यघृताक्तभक्तैः ।
रोगं पुनः सक्तमण्डललाजपिण्डै-
रित्थं यजेद्वरुणदिङ्निलयां स्तथाष्टौ ॥ १६ ॥
वायुं पीतध्वजेनाथकनककुसुमै र्नागमक्षय्यभक्तै
र्मुख्यं सोमं च दुग्धप्लुतसितकुसुमैर्मुद्गपिष्टै र्घृताक्तैः ।
भल्लाटं चार्गलाख्यं घृतगुडमिलितै र्माषसालूकपिण्डै
र्दुग्धान्नैः खण्डदीपैर्दितिमदितिमिमानर्चयेदुत्तरेऽष्टौ ॥ १७ ॥
कोणान्तेषु क्रमेणार्चयतु च चरकीं दग्धमांसैर्घृताक्तै
र्दुग्धक्रव्यैर्विदारीं सरुधिरपलकैः पूतनां पूतिपित्तैः ।

दक्षां पित्तामिषेण चतजमधुयुजा राक्षसीं पापपूर्व्वां
पूर्व्वस्यां शर्व्वमेवं सह मधुघृतगोरोचनैश्छागमांसैः ॥ १८ ॥
सपूपमांसैरथदक्षिणस्यां गुहं घृतैरर्य्यमणं समांसैः ।
रक्ताम्बुजैर्जम्भकमुत्तरस्यां ततो बहिश्चाष्टकुलाधिनागान् ॥ १९ ॥
यजेत् पद्मयाऽनन्तमत्यन्तशुभ्रं
सितं वासुकिं चोत्पलाप्राणनाथम् ।
सुमध्यायुतं तक्षकं पिङ्गलाङ्गं
सुपथ्यान्तकर्कोटकं कृष्णवर्णम् ॥ २० ॥
शङ्खं सुपीतं च दधिप्रियाप्रियं श्वेतास्ययातं कुलिकं रविच्छविम् ।
सुनेत्रया पद्ममकृष्णवर्चसं महादिपद्मं ससुगन्धिनं सितं ॥ २१ ॥
एतान् संतोष्य भोगावलिकलितशिरःपृष्ठभागान् मनुष्या-
कारानानाभ्यधस्ताद्विषधरवपुषोऽतुच्छपुच्छान्द्विबाहून् ।
पत्नीभिस्ताहृशीभिः करधृतसपयःस्वर्णपात्रोत्पलाभि
र्दुग्धैः खण्डाज्यमिश्रैरथवसुषुदिशास्वर्चयेद्धेतुकाद्यान् ॥ २२ ॥
यवैर्हेतुकं माषपिण्डै रिपुघ्नं
घृतान्नेन वह्निं पयोभिर्द्विजिह्वं ।
अपूपेन कालं गुड़ान्नैः करालं
तथैकांघ्रिमामिक्षयाभीममाज्यैः ॥ २३ ॥
अभावतः केवलखण्डपायसै
र्दुग्धोदनैर्वा घृतमाषतण्डुलैः ।
दद्याद्बलिं सर्वसुरेभ्यआदरा-
दाद्यन्तयो स्तोयमुपाहरन् बुधः ॥ २४ ॥

शस्तेयं वास्तुपूजाऽखिलकुशलकरी वाजिशीर्षानुसारि-
ण्यन्यापि प्रोच्यते या स्मृतिमतविदुषां सम्मताथ प्रसङ्गात् ।
रेखाभिर्दिङ्मिताभिर्नवनवकपदान्येषु कृत्वा पुरोवत्
पूजां कुर्य्यादजादेर्निजनिजवलिभिः सोपचारैर्यथावत् ॥ २५ ॥
तन्मध्ये नवकोष्ठपङ्कजगतं ब्रह्माणमेतद्बहि
र्दिच्चार्य्यादिचतुष्टयं त्रिपदके कोणद्विपंक्त्यन्तरा ।
आपाद्यान् द्विपदद्विकेष्वथ वहिः कोणैककोष्ठत्रिके
दिक्कोष्ठद्वयपञ्चपञ्चसुसुरानीशानमुख्यान् यजेत् ॥ २६ ॥
अन्यत्सर्वं पूर्ववत् कर्म्म कुर्य्या
देतत् प्रोक्तं गोभिलादेर्मतं च ।
अन्यद्वच्ये तान्त्रिकं मान्त्रिकाणां
चुस्' पुण्यं राजमार्गोपमं यत् ॥ २७ ॥
रेखाभिर्नवभिः क्रमाद्विरचिते कोष्ठे चतुःषष्ठिके
तिर्य्यक् सूत्रयुगं निपात्य रजसा कोणानुकोणं बुधः ।
मध्येऽजं च चतुष्पदेऽमुमभितो दिक्षुद्विकोष्ठेषु तान्
देवानार्य्यमुखान् क्रमेणचतुरो वह्न्यादितोऽष्टौ पुनः ॥ २८ ॥
कोणेष्वर्द्धपदद्विकेषु युगशः सावित्रमुख्यान् बहिः
पंक्तौ सार्द्धपदद्वयेषु च यजेत् शर्वादिदेवाष्टकम् ।
आद्यान्सार्द्धपदेषु दिग्गतपदेष्वीशानकोणादितो
द्वात्रिंशत्सुरपुङ्गवान् पृथगथो ईशानमुख्यान् वहिः ॥ २९ ॥
पुरोवदन्यत्सकलं विदध्यादितीरितं श्रीमति गौतमीये ।
पथाऽमुना वास्तुसमर्च्चनं वै परं तु भद्राय चरन्तु सन्तः ॥ ३० ॥

प्राहु: केप्येकविंशाधिकशतपदकं मण्डलं कार्य्यं मार्य्या-
उद्यानाट्टालदुर्गादिषु च तदितरज्जीर्ण हर्म्योद्धृतौ च।
प्रासादे मण्डपे चा खिलगृहकरणे यागशालादिके च
चिप्रक्षेमप्रदत्वादपिसदसि चतु:षष्टिकोष्ठं सदेति ॥ ३१ ॥
एवं वैकतमेन केन चिदिदं निर्वाह्य वास्त्वर्च्चनं
दद्याद्वास्तुवलिं वलारिमुखदिक्पालेभ्य आशास्वपि ।
ये वेतालपिशाचभूतनिवहा: कुष्माण्डवैनायका-
रक्षोमातृगणादुग्रभूतलचरास्तेभ्योऽथदद्याद्बलिं ॥ ३२ ॥
कुशमार्जनगव्यलेपनोत्खननोद्धारणमृज्जलोक्षणै: ।
परिशोधित आशयेत्शुचिं शुचिनि स्थण्डिल ऐष्टदैवतम् ॥ ३३ ॥
तत: पवित्रीकरणं विधाय प्राय: प्रणीतानयनादिकं च ।
पर्य्यग्निकृत्यादिभिराज्यशुद्धिं वह्निं परिस्तिर्य्य स्रुवं विशोध्य ॥३४॥
हविराहुतिभि: पृथक् पृथक् जुहुयाद्वास्तुसुरांस्तथैकश: ।
अजमेकशतेन चापरान्दशभिर्वा तदशक्तितोऽर्द्धत: ॥ ३५ ॥
तत्राप्यशक्तौ हवनं दशांशत: समाप्य पूर्णाहुतिमाचरेत् स्रुचा ।
कृतार्घकुम्भंविनिधाय मङ्गलं गत्वोपपत्तिं हरिदिङ्मु खोवसेत् ॥३६॥
नागान् संपूज्य तस्मिंस्तदुपरिसपय:सप्तवीजाक्षतानि-
क्षिप्त्वा कुम्भाम्बु भूतापसरणमनुना निक्षिपेत्तत्र मध्ये ।
शैलेयं चेष्टकं वा कमठमथपृथुस्तम्भमेकं निखन्य-
प्रोते गर्त्ते समन्तादवनतशिरसा प्रार्थयेद्भूमिदेवीं ॥ ३७ ॥
देहि वास्तुमनघे वसुन्धरे पुत्त्रपौत्त्रधनधान्यवृद्धये ।
यावदिन्दुरविमण्डलंधरा तावदस्तु मम वास्तु सुस्थिरम् ॥ ३८ ॥

दत्त्वा सुभोज्यवसनाभरणं द्विजेभ्योऽ-
छिद्रावधारण मन्त्रोभिरथो विधाय ।
यागालयाय वरयेद्दरमाशुकारि-
तत्त्वाणमाभरणचन्दनगन्धमाल्यैः ॥ ३९ ॥
रचयेदथमण्डपं सुधीरुपलैर्वा विपुलैरथेष्टकैः ।
अथवा दृढचारुदारुभीरुचिरं तस्यनिरूपणं ब्रुवे ॥ ४० ॥
मध्येस्तम्भचतुष्टयं विनिखनेद्वाह्येऽभितोद्वादश
प्रोत्तुङ्गान् सरलान् प्रशस्ततरुजान् सारांशभूतान् भुवि ।
तान् षोढाप्रविभज्य तत्रतदधो भागद्वयेप्राङ्गणं
जंघैकेन च कल्पतां वलययुक्स्तम्भोदरं च त्रिभिः ॥ ४१ ॥
स्तम्भाग्रेवरमण्डलान्यमलकान्यूर्ध्वंविटङ्कानिच
श्रेणीनां स्थगनार्थमेतदुपरि प्रालम्भपिण्डद्वयं ।
कार्य्यं कौतुकरूपकातिरुचिरं किम्वाष्टभिः पञ्चभि
र्हस्तैः पारितिकामताः परिमिता वाह्या स्वतुःपंक्तिषु ॥ ४२ ॥
वाह्याष्टाङ्गस्तम्भवर्गस्य यावत्प्रौन्नत्यं स्यान्मध्यगानां चतुर्णां ।
कार्य्यं जंघाचोदरंतावदेव स्यादाधिक्यं वेश्मदैर्घ्यानुरूपम् ॥ ४३ ॥
लोहस्यकीलैर्वलयैः समन्ताद्दृढीकृतस्तम्भकुलोपरिष्टात् ।
श्रेणी निपात्यायतितुर्य्यदैर्घ्या सपालिकोद्यास्त्रवती* स्थिरा च ॥४४॥
अवान्तरे श्रेणिविधारणार्थं कोणोरुदण्डाविनिपातनीयाः ।
पृथक् तदन्तर्गुरुयन्त्रकाख्याधार्य्यास्तथाश्वर्य्यसुशिल्पिचर्य्याः ॥४५॥

---

* समालिनीति पाठान्तरं । ६ पंक्ति ।

धेयाप्रतिस्तम्भशिरस्सुरम्यागोपानसीनीध्रघरावराग्राः ।
तत्रोपरिष्टादनुकोणमूर्द्धंतिर्य्यङ्निपात्याष्टदृढ़चारुकाण्डाः ॥ ४६ ॥

प्रच्छादसान्द्रमृजुदारुजपट्टिकाभि-
रूर्द्धं पुनर्विरचयेच्छिरएकमेव ।
धूमापसारणकृते कृतकन्धरान्त-
श्छिद्रं चतुस्तुलककाण्डवलीकमेकम् ॥ ४७ ॥

निर्म्माय तत्र कलशं विलसत्पताक-
माच्छादयेदुपरि सौधमयेष्टकाभिः ।
तं नारिकेलदलपालिभिरञ्चताभि-
र्वंशादिपत्रपटलैर्दृढ़वीरणैर्वा ॥ ४८ ॥

लोकेशवर्णाः परितः पताकामध्ये ध्वजः किङ्किणिकान्वितः स्यात् ।
तदर्थमष्टास्वपि दिक्षु कीलान्यूर्द्धं च दण्डं विनिवेशयेच्च ॥ ४९ ॥

दण्डस्त्रिहस्तः शरदोर्मितोवा तदर्द्धमानानि च कीलकानि ।
चोरद्रुसारैरृजुभिः कृतानि वंशैस्तथा निःशुषिरैर्दृढ़ैर्वा ॥ ५० ॥

मध्यस्तम्भायाममात्राच्च वेदीमध्ये कार्य्या रत्निमात्रोच्छ्रयेण ।
बाह्ये तस्याः पादभागाः समाः स्यु र्वीथीरूपा दिक्षु चत्वार एव ॥५१॥

वेद्याश्चतुर्दिक्षु नरप्रमाणा द्वारश्चतस्रो रुचिरा विधेयाः ।
अश्वत्थयज्ञाङ्गजटीवटानां सारैर्विशालैरृजुभिः क्रमेण ॥ ५२ ॥

शाखा तासु दशाङ्गुलायतियुता स्तम्भप्रमाणोन्नता
नासा तत्र शिलाऽपि तत्र रुचिरा द्वारार्द्धमाना मता ।
तत्रान्तः शशिखण्डमण्डलनिभं पद्मोदरं तोरणं
नानारूपकचित्रकर्मरुचिरं कार्य्यं सशस्त्राग्रकम् ॥ ५३ ॥



5910

चक्रं शङ्खगदाम्बुजानि रचयेद्दिक्षु क्रमाद्वैष्णवे
तत्तत्तोरणमौलिकीलशिखरेष्वत्त्रिभागानि च।
अन्यत्र त्रिशिखानि लोहरचितान्युग्राणि शूलानि च
प्राहुः केचन तान्त्रिका ऋजुदृशः सर्वत्र चक्राणि वा ॥ ५४ ॥

द्वारि द्वारि कवाटयुग्ममतुलं कार्यं त्वहार्य्यार्गलं
द्वारस्योभयपार्श्वतोऽतिनिविड़ा भित्तिः सुधांशूज्ज्वला।
यातायातसुखार्थमश्मशकलैः सोपानमेकैकशः
स्निग्धं सप्रघणं घनं सुरुचिरं प्राचीरमेतद्बहिः ॥ ५५ ॥

साधारणं लक्षणमेतदुक्तं क्रियासु दीक्षादिषु मण्डपस्य।
विशेषतोऽतः परिमाणमस्य बोध्यं महादानमखक्रियासु ॥ ५६ ॥

* दशरविकरायामावन्त्यौमतावथ मध्यमौ
† रविमनुकरायामौ श्रेष्ठौ कलाधृतिपाणिकौ।
विततिरपि च प्रोक्तायामोन्मितौ बहिर्मण्डपे
नखकरमपि प्राहुः केचित्तुलापुरुषार्पणे ॥ ५७ ॥

इत्थं मण्डपमारचय्य तदुपप्राचयां सदोमण्डपं
शालामङ्कुररोपणाय च तथोदीच्यां नृयुग्मायताम्।
दैर्घ्यार्द्धमितां सुभित्तिपटलाच्छन्नां कवाटार्गल-
द्वारारोहणतोरणाङ्गणयुतां प्राक्पश्चिमायामतः ॥ ५८ ॥

---

* महादानमखयोर्मण्डपपरिमाणे विशेषमाह—अत्राधमपक्षे क्रमेण तयोर्दशद्वादशहस्तपरिमितौ, मध्यमौ च द्वादशचतुर्द्दशहस्तपरिमितौ, उत्तमौ पुनः षोडशाष्टादशहस्तपरिमितौ मण्डपौ करणीयौ। कला षोड़श, धृतिः अष्टदश।

† अत्र विततिरपिच प्रोक्तायामोन्मिते वहिर्मण्डपं नखकरमितं प्राहुः केचित्तुला पुरुषार्पणे इत्येवं पाठः साधुः।

वारुण्यामधिवासमण्डपमपि स्तम्भैश्चतुर्भिर्युतं
तादृग्भित्तिकवाटतोरणवितानाद्यैश्च संशोभितम् ।
कुर्य्यात् कोणगृहं तदर्थमखिलद्रव्याभिरक्षाक्षमं
तद्योग्यायतिविस्तरं सुरुचिरं मङ्क्ति तद्दक्षिणे ॥ ५८ ॥
ऐशान्यामभिषेकमण्डपमथो तादृग् विदध्यात् सुधी-
र्मध्ये बद्धवितर्द्दिकं स हि चतुष्पाद्गात्रपीठोज्ज्वलम् ।
अन्येषामुपदेशनार्थमभितस्तत्कौतुकं पश्यतां
छायामण्डपशालिकां विरचयेत् पत्रादिभिश्छादिताम् ॥ ६० ॥
दीक्षां मण्डपवेदिकां च नवधा संभज्य दिक्षु क्रमात्
प्रागादिष्वनुदक्षिणं विरचयेत् कुण्डाष्टकं शास्त्रवित् ।
मध्ये मण्डलमुच्यमानविधिना तत् सर्वतोभद्रकं
तस्मात्तं प्रथमं वदामि विधिवद्धस्तादिमानं पुनः ॥ ६१ ॥
उद्बाहोः प्रणवोत्थितस्य पुरुषस्यांशो हि यः पञ्चमोऽ-
सौ हस्तः प्रवदन्ति केचिदपरे प्राहुर्वितस्तिद्वयम् ।
सिद्धान्ते तु स चाङ्गुलानि कथितो हस्तश्चतुर्विंशति-
र्विज्ञेयं त्रिविधं तदङ्गुलमथो मात्रादिभेदाद्बुधैः ॥ ६२ ॥
परिमाणे प्रथमः परागुरेव द्व्यणुकस्तद्द्वितयं त्रयेण तेषाम् ।
* त्रसरेणुरसौ विलोक्यतेऽद्धा गृहवातायनगर्भभानुभासाम् ॥६३॥

---

* गृहवातायनगर्भभानुभासाम् इति सर्वत्र पाठोदृश्यते। तथाच गृह-वातायनगर्भभानुभासां मध्येऽसौ त्रसरेणुर्विलोक्यते इत्येवमन्वयः। वस्तुतोऽद्धापदं विहायान्तरिति निवेशे गृहवातायनगर्भभानुभासामन्तर्विलोक्यते इत्यमन्वयः समीचीनः प्रतिभाति ।

तैरष्टभिः स्यादथ रेणुसंज्ञस्तदष्टकेनैव हि कुन्तलाग्रम्।
तदष्टकं लक्षत एव लिख्या लिख्याष्टकेनैव भवेद्धि यूका ॥ ६४ ॥
यूकाष्टकेनैव यवः प्रदिष्टस्तैः पार्श्वगैरष्टभिरङ्गुलं स्यात्।
मुष्टिर्भवेद्विंशतिरङ्गुलानि तथैकविंशाङ्गुलएव रत्निः ॥ ६५ ॥
सार्द्धाङ्गुले नाधिक एव तस्मादरत्निरेष स्वकनिष्ठिकान्तः।
हस्तश्चतुर्विंशतिरङ्गुलानि मात्राङ्गुलस्य क्रम एष उक्तः ॥ ६६ ॥
मानाङ्गुलं भवति कर्त्तुरसव्यपाणे-
र्मध्याङ्गुलीकलितमध्यमपर्व्वदैर्घ्यम्।
मुष्ट्यङ्गुलं तु चतुरङ्गुलमुष्टिमात्रं
लम्बाङ्गुलं तु सकलीकृतमध्यमैव ॥ ६७ ॥
आद्येन द्वितयेन वा विरचयेत् कुण्डादिकं मण्डपं
शालास्रक्स्रुवमङ्गलाङ्कुरपयःपूजाङ्गपात्राणि च।
कुर्य्याच्चेत् प्रतिमां यथोक्तविधिना मानाङ्गुलेनैव हि
व्यर्था स्यादमुना विनापि घटिता संस्थापिता सा यतः ॥ ६८ ॥
मुष्ट्यङ्गुलैर्भवति षोड़शभिश्च हस्तो-
लम्बाङ्गुलैरपि तथा विदधीत ताभ्याम्।
वापीतड़ागरथकुट्टिमकूपसेतु-
प्रासादपीठशकटादिकमन्यथा न ॥ ६९ ॥
हस्तादिमानं कथितं किलैतत् पलादिमानं च कलादिमानम्।
तत्तत्प्रसङ्गे कथयामि पश्चात्तस्मात्त्विदानीं प्रकृतं वदामि ॥ ७० ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्वस्वे दीक्षाङ्गभूतमण्डपादिस्वरूपनिरूपणं नाम द्वितीयः संग्रहः ॥ ० ॥

अथ तृतीयः संग्रहः ।

शास्त्रैरमेयाङ्गुलहस्तमानं कुण्डानि कुर्य्याद्विपुलेष्टकाभिः ।
विश्वास्यमानाहुतिहोमसंख्यानुरूपमानेन यथास्वरूपम् ॥ १ ॥

पञ्चाशद्धोमकर्मण्यभिमतफलदं मुष्टिमात्रं हि कुण्डं
कुर्य्याद्रत्निप्रमाणं शतहवनविधौ चाधिकेऽरत्निमात्रम् ।
दोर्मात्रं तत्सहस्रावधिकृतहवने दोर्द्वयं चायुते स्या
ल्लक्षे तद्वेददोः षट्करमथनियुते कोटिहोमेऽष्टहस्तम् ॥ २ ॥

केचित् प्राहुर्लक्षहोमे करैकं
यावल्लक्षं वर्द्धते होमकर्म ।
तावद्धस्तं वर्द्धयेत् कुण्डमेवं
दिग्घस्तान्तं (१) नाधिकं स्यात्ततोऽस्मिन् (२) ॥ ३ ॥

विहितं क्वचिदत्र कस्यचिद्वा दशलक्षावधि होमकर्म भूमौ ।
न ततोऽधिकमेव तेन कुण्डं दशहस्तावधि नाधिकं प्रसिद्धम् ॥४॥

प्रमाणमेतत् कथितं प्रसङ्गात् सर्वत्र हस्तावधि सुप्रशस्तम् ।
तावत् प्रमाणेन च कुण्डभेदान् वक्ष्येऽथ वेदास्रमुखान् यथावत् ॥५॥

वेदास्रं योनिमर्द्धोडुपनिभमनलास्रं च वृत्तं षडस्रं
पद्माकारं गजास्रं हरिहयहरिदारभ्य (३) तस्यां विदध्यात् ।
मध्ये वृत्तं च गौरीपतिसुरपदिशोः पण्डिताः केचिदाहु-
र्वायव्ये पञ्चकोणं दिशि मदनरिपोः सप्तकोणं च कुर्य्यात् ॥ ६ ॥

(१) दशहस्तपर्य्यन्तम् । (२) अस्मिन्—होमविषये । (३) पूर्वदिगारभ्य ।

सर्वसिद्धिकरमम्बुधिकोणं (१) पुत्रदं मनसिजालयखातम् । (२)
अर्द्धचन्द्रसदृशं शुभदं स्यादग्निकोण (३) मरिमर्द्दनहेतुः ॥ ७ ॥
शान्तिकर्मणि भवेत् सुवर्त्तुलं च्छेदमारणकरं हि षड़स्रम् ।
पद्मकुण्डमिह वृष्टिकारकं रोगशान्तिकरमष्टकोणकम् ॥ ८ ॥
ग्रहदोषनिवारणं षड़स्रमचलास्रं त्वभिचारशान्तिकारि ।
गुरुकुण्डमशेषसिद्धिदायि प्रथितं तद्दशधाग्निधिष्ण्यमेवम् ॥ ९ ॥
विप्राणां चतुरस्रमेव विहितं स्याद्वर्त्तुलं भूभुजां
वैश्यानां शशिखण्डमण्डलनिभं त्र्यस्रं त्ववागजन्मनाम् ।
सर्वेषां तु युगास्र (४) मेव सकलाभीष्टप्रदं केचन
प्राहुस्तद्यदभीष्टकर्मसु तथा तत्तत् सदा कल्पयेत् ॥ १० ॥
प्राक्सूत्रं प्रथमं विधाय विदधीतार्द्धेन तस्याङ्कितं
मध्ये मत्स्ययुगं दिशोरमलधीः कीनाशवित्तेशयोः (५) ।
आभ्यां सूत्रमपि प्रसार्य्य चतुरः कोणांस्ततो लाञ्छयेत्
चेत्रं स्याच्चतुरस्रमत्र रचयेदन्यानि कुण्डान्यपि ॥ ११ ॥
कुण्डव्यासोत्सेधतत्त्वांश (६) मादौ
त्यक्त्वाधस्तात्तेन नेमिं प्रकल्प्य ।
ऊर्द्ध्वोर्द्ध्वस्ता (७) मेखला स्तत्र तिस्रः
कुर्य्यात्तद्वद्देदसङ्ख्याभुजांशैः ॥ १२ ॥

---

(१) अम्बुधिकोणं—चतुरस्रम् । (२) योनिकुण्डम् । (३) त्रिकोणम् । (४) युगास्रं—चतुरस्रम् । (५) दक्षिणोत्तरयोः । (६) तत्त्वांशश्चतुर्विंशांशः । (७) नेमित उपर्य्युपरि ।

हस्तमात्रखनने हि ताः क्रमाद्द्वादशाष्टचतुरङ्गुलोच्छ्रिताः।
सर्वतोऽङ्गुलिचतुष्कविस्तृता मेखलाः सकलसिद्धिदा मताः ॥ १३ ॥
मध्ये नाभिरमुष्य पङ्कजनिभा वेदाङ्गुला तां त्रिधा
भक्त्वा कर्णिकया दलानि परितः कुर्य्याद्दलाग्राण्यपि।
कुण्डं द्वादशधा विभज्य च ततो भागैकमात्राशया-
न्नाभेरुच्छ्रयमाश्रये(१)त्तदधिकं न्यूनं च नो कारयेत् ॥ १४ ॥
कुण्डस्यान्तिममेखला (२) ननु भवद्वेदी च वेदास्रिणो
सा वेदाङ्गुलिसम्मिता निगदिता होतुः पुरोवर्त्तिनी।
तन्मध्योत्थितनालमौलिमिलिता कुण्डस्य योनिर्भवे-
दायामोन्नतिविस्तरेण सहिता कुण्डानुरूपेण च ॥ १५ ॥
सा योनिः पश्चिमायामथ दिशि चतुरस्रस्थलारब्धनाला
तन्मध्योल्लासिरन्ध्रोपरिपरिरचिता ह्यश्वत्थपत्रानुकारा।
उत्सेधायामकाभ्यां प्रकृतिविकृतिसंख्याङ्गुलाष्टाङ्गुला स्या-
द्विस्तृत्या द्वादशार्द्धाङ्गुलमितनमिताग्रा निविष्टेव कुण्डे ॥ १६ ॥
संक्षेपतो लक्षणमेतदुक्तं वेदास्रकुण्डस्य गुरूपदेशात्।
अन्यत्र वेदास्रभुवं प्रमाय योन्यादिकुण्डानि तथा विदध्यात् ॥१७॥
क्षेत्रे क्षिप्त्वा वह्निरिहपुरोभूतभागेऽशमेकं
कोणार्द्धार्द्धप्रमाणं सुनिशितशितधीर्भ्रामयेत् संप्रगृह्य।
यावत् कोणं परमपि तथा सूत्रयुग्मस्य पातं
मध्यात् कुर्य्यात् भवति तदिदं मन्मथागारकुण्डम् ॥ १८ ॥

---

(१) नाभेरुच्छ्रयमाचरेत्तदधिकम् इति (ग) पुस्तके पाठः।

(२) मनुभवे इति (ग) पुस्तके।

परित्यज्य भागद्वयं पंक्तिभागी-
कृतेऽत्रोपरिष्टादधस्ताच्च विद्वान् ।
परिभ्रामयेत्तेन मानेन सम्यग्-
भवेदर्द्धचन्द्राह्वयं कुण्डमेतत् ॥ १८ ॥
शर्वरीशार्द्धभागीकृते चेत्रतः पार्श्वयोर्न्यस्य भागद्वयं पण्डितः ।
तेन मानेन सूत्रद्वयं विन्यसेत् कुण्डमेतद्भवेद्द्रत्नेत्रास्रकम् ॥ २० ॥
दिग्यवादधिकपंक्तिभागतः चेत्रतोनिशितधीर्बहिर्न्यसेत् ।
भागमेककमनेन सर्व्वतोभ्रामयेद्भवति वृत्त मुत्तमं ॥ २१ ॥
भूपांशेऽंशद्वयमपि बहिः पार्श्वयोर्न्यस्य मध्य-
चेत्रव्यासे सुविमलमतिस्तेन मानेन कृत्वा ।
पार्श्वद्वन्द्वे समयुगयुगं सूत्रषट्कस्य पातं
कुर्य्यात् कुण्डं भवति तदिदं तर्ककोणं मनोज्ञम् ॥ २२ ॥
दशांशेऽत्र विन्यस्य बाह्येऽंशमेकं
परिभ्राम्य तेनैव वृत्तं दलानाम् ।
बहिर्मध्यमेकर्णिकां चापि कुर्य्यात्
तदेवाष्टपत्रं भवेत् पद्मकुण्डम् ॥ २३ ॥
चेत्रे चिह्नाऽत्र बाह्ये दिशि दिशि मिहिरद्वन्द्वकांशेऽंशमेकं
कृत्वानेनाब्धिकोणं पुनरपि मतिमान् कोणतोऽर्द्धं गृहीत्वा ।
तत्कोणाभ्यां विदध्यादिह खलु परितस्तेनमानेन चिह्ना-
दष्टास्रं स्यात् समन्तादपि च वितनुयादष्टसूत्रप्रयोगम् ॥ २४ ॥
हयांशेऽत्र भागं बहिर्न्यस्य वृत्तं परिभ्राम्य भूयो युगांशीकृतेऽंशैः ।
त्रिभिः पट्टदैर्घ्यं भवेत् पञ्चसूत्रप्रयोगादिदं तेन पञ्चास्रकुण्डम् ॥२५॥

क्षेत्रव्यासे दशांशैर्बहिरिह विनिधायैकमंशं सुवृत्तं
मानेनानेन कृत्वा पुनरपि च चतुःषष्टिभागीकृतेऽत्र ।
पट्टायामप्रमाणं दृढमतिरमुना सत्रिकैस्त्रिंशदंशैः
कुर्य्यात् सप्तास्रकुण्डं भवति हितमिदं सप्तसूत्रप्रयोगात् ॥ २६ ॥
यावन्मानं कुण्डविस्तार उक्तं तावत् खातस्यापि मानं प्रदिष्टम् ।
कुण्डाकारं पण्डितो यादृशं वै तादृग्रूपं मेखलानां विदध्यात् ॥२७॥
तिस्रः कुण्डे मेखला मेखले द्वे
यद्वा विद्वानेककां मेखलां वा ।
एकां कुण्डत्र्यंशनागेन्द्रतां च
द्वे चेत् कुर्य्यादादिमायाः प्रमाणात् ॥ २ ॥
पञ्चैवस्युर्मेखलाः केचिदाहुः षट्पञ्चाब्धित्र्याद्यभागैः क्रमेण ।
तुङ्गास्तावत् कुण्डतुङ्गानुरूपा दोर्मात्राद्या वर्द्धयेत्ताः क्रमेण ॥२८॥
कुर्य्यादूर्द्ध्वं मेखलाया गजौष्ठा-
कारां योनिं चापि होतुर्दिशीह ।
वच्ये मानं मुष्टिमात्रादिकुण्डे
तारोत्सेधे * मेखलायाश्चयोनेः ॥ ३० ॥
मुष्टिमात्रेतु ता मेखला द्व्यङ्गुलैका-
ङ्गुलार्द्धाङ्गुलोत्सेधताराः क्रमात् ।
किन्त्वरत्नोमिते त्र्यङ्गुलद्व्यङ्गुलैका-
ङ्गुलोत्सेधतारा भवेयुः पुनः ॥ ३१ ॥

---

* तारोत्सेधे :—आयामोत्सर्गः ।

युगाप्यित्तनेत्राङ्गुलोत्सेधतारा:
स्युरेता: पुनर्हस्तमात्रे तु कुण्डे ।
करद्वन्द्वमात्रे रसाम्भोधिवह्न्य-
ङ्गुलोत्सेधतारा भवेयु: पुनस्ता: ॥ ३२ ॥

वेदकरेऽस्मिन् सिन्धुरतर्काब्ध्यङ्गुलतारोत्सेधयुता: स्यु: ।
षट्करमात्रेऽस्मिन् दशवस्वङ्गाङ्गुलतारोत्सेधसमेता: ॥ ३३ ॥

भास्करपंक्तिगजाङ्गुलतारोत्सेधयुता: स्युरिमा वसुहस्ते ।
द्व्यङ्गुलतोऽधिकमुत्श्रयतारौ स्त: खलु तासां तदधिकहस्ते ॥३४॥

मुष्टिमात्रे रसाम्भोधिनेत्राङ्गुलायामतारोन्नतिर्योनिरुक्ताबुधै: ।
नेत्रवेदाङ्गुलोत्सेधतारान्वितानाभिरप्यत्र योन्यग्रमेकाङ्गुलम् ॥३५॥

हस्तमात्रस्य या योनि रुक्ता मया तां पुनर्वर्द्धयेदन्यकुण्डे क्रमात् ।
कुण्डषष्ठांशतो नाभि मप्याचरेद्द्वादशांशोन्नतां कथ्यते तद्यथा ॥३६॥

एकैकेनाङ्गुलेनामलमति रनु तद्वर्द्धयेदन्यकुण्डे-
ष्वेषायोनिश्चनाभिं खलु यवयुगलेनेह योन्यास्तथौष्ठम् ।
कुर्य्यान्नाभिञ्च वृत्ताकृति मपि यदि वा कुण्डरूपानुरूपां
योन्याकारेण योनिं सरसिजसदृशे नेह कुर्य्याच्च नाभिम् ॥ ३७ ॥

कुण्डस्यैके हस्तमात्रस्य योनिं
प्रादुर्भुताग्न्यङ्गुलायामताराम् ।
व्यामत्र्यंशैकांशकोत्सेधयुक्तं *
कुर्य्यान्नागस्याधरौष्ठानुकाराम् ॥ ३८ ॥

* युक्तमित्येव सर्व पुस्तकेषुपाठ:
युक्तामित्यवं भवितुमर्चितं ।

नेत्रभूताङ्गुलोत्सेधतारान्वितां
नाभिमंशद्दये तद्दलान्यष्ट च।
व्यासवह्न्यंशभागेनतत्कर्णिकां
मध्यभागे विदध्यात् बुधः कुण्डतः॥ ३९॥
कुण्डस्यैककरस्य चारु परितो नेमिर्भवेदङ्गुलै-
र्नेत्रैनैव ततो विलोचनकरादारभ्य संवर्द्धयेत्।
कुण्डाद्दिक्करसम्मितावधि बुधः प्रत्येकमर्द्धाङ्गुलं
तद्वाह्ये खलु मेखलात्रितयकं कुर्य्यात् यथोक्तक्रमात्॥ ४०॥
शक्तावेवं कुण्डवृन्दं विदध्यात्
तत्राशक्तो दोच्चितः कुण्डयुग्मं।
ऐशान्या माचार्य्यकुण्डं ह्युदीच्यां
कुण्डं कुर्य्यात् स्वस्ववर्णोदितं यत्॥ ४१॥
तस्मादशक्तो दिशि वित्तपस्य
वेदास्रमेकं रुचिरं विदध्यात्।
नित्ये च नैमित्तिक एव कर्म्म-
ण्यस्मिन् विदध्यात् खलु होमकर्म्म॥ ४२॥
यद्येककुण्डं विधिना युगास्रं कुर्य्यादुदीच्यां दिशि वेदिकायाः।
तं मण्डपं पञ्चकरं विदध्यात् पूर्व्वोक्तरूपं मुनिहस्तकं वा॥ ४३॥
यदि स्ववर्णोचितकुण्डमेकं कृत्वोत्तरस्यां दिशि चेश्वरस्य।
आचार्य्यकुण्डं विदधीत तत्र समण्डपोऽष्टग्रहदोर्म्मितः स्यात्॥४४॥
यद्यष्ट कुण्डानि भवन्तिदिक्षु आचार्य्य कुण्डादिमहासमृद्धौ।
दिग्दोर्म्मितं द्वादशदोर्म्मितं वा कुर्य्यात्तदा मण्डप मेव पूर्व्वम्॥४५॥

इतोऽन्यथा चेत् परिकल्पनीयं न सम्भवेन्मण्डल कुण्डवृन्दम् ।
न्युनासुवेदीष्वधिकासु तावत् स्थानं वृथा स्यादुपयोगशून्यं ॥ ४६ ॥
कुण्डं कुर्य्यादिष्टकानामभावे संपिष्टाभि र्मृद्भिरुष्णाम्बुसेकैः ।
आर्द्रे कुण्डे दोषमाहु र्महान्तः शुष्कं संपाद्यैव कुर्व्वीत होमं ॥४७॥
कुण्डाशक्तौस्थण्डिलं वालुकाभिः संशुद्धाभि र्वालनीनिर्गताभिः ।
कुण्डाकारं मुष्टिरत्नै रकमात्रं कुर्य्यात् स्वोयाङ्गुष्ठपर्व्वोन्नताच्च ॥४८॥
चतुष्कोणमथ्याङ्गुलोत्सेध मेकं
बुधा हस्तविस्तारयुक्तं तदाहुः ।
यथाशास्त्रमेवं यथेच्छं विधाय
प्रकुर्व्वीत होमं विना यज्ञवेदीम् ॥ ४९ ॥
वक्ष्याम्यथोस्रुक्स्रुवयोस्तु लक्षणं
होमक्रियासाधनमुख्ययोः स्फुटम् ।
धातुश्च यौ संयतिमुख्यमायुधं
वह्नेरपि ग्राममसमर्पणे करौ ॥ ५० ॥
श्रीपर्णिकागुरुविकङ्कतशिंशपासु-
क्षीरद्रुमेष्वमलमेकतमस्य सारम् ।
षट्त्रिंशदङ्गुलमितं परिगृह्य तस्मिन्
विद्वान् स्रुचं विरचयेद्वरशिल्पिनैव ॥ ५१ ॥
दण्डोविंशलवोऽङ्गुलाष्टकमिता वेदि स्तथैकाङ्गुलं
कण्ठं सप्तलवं मुखं तदखिलं षट्त्रिंशतासाधितम् ।
कण्ठोविस्तरतश्चवेदिविहितं त्र्यंशैकभागाश्रितः
कण्ठेनैव समं तदग्रमुदितं मार्गं मुखे कल्पयेत् ॥ ५२ ॥

* तुल्यांशोऽपिकनिष्ठयाहृतपरिस्पन्दाय वेदि: पुन:
कर्त्तव्या चतुरस्रमुक्तिरधुना तत्कल्पना कथ्यते।
एकांशेन तदन्तरे विरचयेत् कान्त्याधिकां † कर्णिका-
मेकांशेन ततोऽभितोऽवटमसौ वृत्तं गभीरं त्रिभि: ‡॥ ५३॥
दण्डानाङ्गो मुनिभिरुदित: षड्भिरंशैस्तदग्रे
कुम्भो वेदाङ्गुलिमितवपुस्त्र्यङ्गुलो मूलकुम्भ:।
द्व्यंशेनैवं रचयतु तयोरन्तिके गण्डिके द्वे
मूले चाग्रे घटितघठयो: स्यादवागूर्द्धमास्यम्॥ ५४॥
अर्द्धांशेन ततोऽथवृत्तमभित: पत्राणि चैकांशत:
कृत्वार्द्धांशमत: परन्तु कलयेदव्याकुलां मेखलां।
वेद्या: पृष्ठमतीवमृष्टमसृणं निर्म्मापयेत् कूर्म्मवद्-
वक्त्रं सुभ्रु खपञ्चिमेऽथ करिणो हंसस्य वा पोत्रिण:॥ ५५॥
स्रुचश्चतुर्विंशतिभिश्चभागै: स्रुवोऽंशयुग्मेनतु होमपाली।
द्वाविंशति स्तस्य तु दण्डभागा स्तोल्यन्तु दण्डस्य चतुर्भिरंशै:॥५६॥
पङ्के यथा रङ्कुपदानुकारी स्रुवस्य खातं विदधीत शिल्पी।
कर्षाज्यपर्य्याप्तममुष्यगर्भं कर्षं तु माढ़द्वयमीरयन्ति॥ ५७॥
मूलाग्रयो:कङ्कणमण्डितं तु दण्डस्य गण्डीयुगलं विधेयम्।
इतोऽन्यथा निर्म्मितमत्रविज्ञ:स्रुवंस्रुचं वा न समाददीत॥ ५८॥

* तुल्या: सोऽपि इति (ग) पुस्तके पाठ: समीचीन: सोऽपि, मार्गोऽपि।
† अधिकशोभां।
‡ कर्णिकाया: परित: एकांगुल भ्रमणेनगर्त्तं त्र्यंगुलगभीरं वृत्ताकारं।

केचिद्दण्डमुशंति विंशतिमितैरंशैस्त्रिभिर्वर्तुलां
दण्डाग्रे हुतपालिकां तदुदरेऽप्यंशद्वयेनावटम्।
गम्भीरं रचयेत् सुवर्त्तुल मथैकांशेन शेषं पुनः
सर्वं पूर्व्ववदुन्नयेदितिबुधैः कार्य्यों विचार्य्य स्रुवः॥ ५८॥
स्रुवाभावेऽश्वत्थाच्चतविपुलपत्रत्रयमसौ
पुटीकृत्यैकां वा स्वकरमितयज्ञाज्यसमिधा।
निबध्नीयाद्वृत्तेष्वतनुकुशरज्ज्वा तदमुना
जुहोतु स्वल्पं चेत् बहुषु बहुशस्तद्विरचयेत्॥ ६०॥
प्रणीताजुह्वादिप्रतिनियतपात्राणि विधिषु
प्रयुज्यन्ते येषु स्थिरमतिरदः कल्पवचसा।
यथाकारं यावत्प्रमितरुचिराण्येव रचये-
त्ततः संगृह्णीयाद् विहितवचसा दर्भसमिधः॥ ६१॥
शुद्धप्रदेशजनिताः पशुभि स्त्वलीढ़ाः
स्निग्धैर्दलैरुपचितास्तरुणाः प्रशस्ताः।
वल्मीककूटजनितामलिनाः पुराणाः
शस्तं कुशा न च, कुशास्त्रिविधाह्रिते स्रुः॥ ६२॥
दर्भः * प्रादेशमात्रो मदयति च सुरान् शस्यते साम्यकृत्ये
द्विप्रादेशं कुशं तु च्चपयति दुरितं पैतृके प्रेतकार्य्ये।
त्रिप्रादेशं च वर्हिं द्र ढ़यति सुकृतं यज्ञहोमादिकृत्ये
ज्ञात्वैतानि प्रबुद्धे भगवति विधिवच्छेदनीयानि विप्रैः॥ ६३॥

---

* दशांगुलस्तु प्रादेश।

नाभेः प्रादेशमात्रे सति वसति विधिस्तद्द्विमात्रे च शौरि
गौरीशस्त्रिमात्रे तदधिकमपि ते तद्द्रुमश्च त्यजन्ति ।
तस्मान्नाभ्या सहैतत्त्रितयमनुदिनं सादरं चाददीत
स्त्रीपुंक्लीवत्वमेषां भवति पृथुतया मूलमध्याग्रकेषु * ॥ ६४ ॥
काम्येषु कर्म्मसु कुशाः स्त्रिय एव शस्ताः
सर्वेषु कर्म्मसु पुनर्विहिताः पुमांसः ।
साध्यं न चास्ति किमपीह नपुंसकैस्तु
तस्मान्नपुंसककुशान्न समाददीत ॥ ६५ ॥
व्रणैः शून्यास्त्वग्भिः पिहिततनवः सार्द्रवपुषः
कनिष्ठाग्रस्थूलाः सदलफलशाखाविरहिताः ।
अनूनाः प्रादेशादधिकपरिमाणेन विधुरा
ऋजुप्रायाकारा विधिषु विहिताः होमसमिधः ॥ ६६ ॥
हन्त्यायुःसंविदीर्णा जनयति दलिता रोगमात्माभिमूखं
मन्त्राणां हन्ति ह्रस्वा निजनिलयलयं प्राटिताग्रा विधत्ते ।
सर्वोच्छेदः कृशायां श्रियमपि हरते दीर्घरूपार्थविघ्नं
स्थूलाऽऽदत्तेऽग्निदग्धापहरति कुलमतः सा समिद्वर्ज्जनीया ॥ ६७ ॥
सम्वत्सरातिक्रमसंगृहीतं
समित्कुशं कर्म्मणि नाति शस्तं ।
हरौ प्रसुप्ते तदहर्गृहीतं शस्तं
तथा भाद्रकुहूदिने वा ॥ ६८ ॥

---

* स्थूलमूलाभवेन्नारी मध्यस्थूलः पुमान्मतः
अग्रस्थूलं भवेत्क्लीवं कुशोऽपित्रिविधोमतः ।

नादेयाः कुशसमिधो द्विजेतरेण
व्यर्थाःस्युः कथमपि चान्त्यजैरदृष्टाः।
संरक्ष्याः शुचिभुवियत्नतस्ततस्ता
न श्वानोऽन्त्यजमनुजा यथा स्पृशेयुः ॥ ६९ ॥
इत्युक्तं निखिलमखादहोमकृत्ये
सामान्यं स्मृतिमतमण्डपादिकृत्यं।
दीक्षादौ प्रतिनियतानि यानि चान्य-
द्रव्याणि स्फुटमथतान्यथो वदामि ॥ ७० ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्व्वस्वे कुण्डादिनिरूपणं नाम तृतीयः संग्रहः ॥

## अथ चतुर्थः संग्रहः।

घृतं प्रशस्तं हवनादिकृत्ये नव्यं सुरभ्युत्तमगव्य मेव ॥
तिलायवाःसर्षपशालयश्च हैमन्तिका मुद्गमुखाहविष्याः ॥ १ ॥
तण्डुलाश्च शितशालिसम्भवा निस्तुषा नच जलाग्निपक्तिमाः
दैवकर्म्मसु हितास्तथामतं मण्डलार्थमपि पञ्चधारजः ॥ २ ॥
शालितण्डुलरजःशितं मतं कुत्रचिच्च कठिनीभवंरजः,
चूर्णितं कुसुमकेशरोद्भवं पीतमेवरजनीरजोऽपिहि ॥ ३ ॥
क्षारमिश्रितनिशारजोऽरुणं केचिदाहुररुणं कुसुम्भजम्। *
† यावकद्रवकषायितं पुनः शालिचूर्णमरुणं मतं क्वचित् ॥ ४ ॥

---

* कुशुम: पुष्पविशेष:।  † लाक्षारस:।

क्षणं दग्धपुलाकचूर्णजनितं श्यामञ्च शुष्कामली-
मालूरादिदलोद्भवं किमथवा नीलीहरिद्रायुतम्।
पञ्चैव स्यु रतो रजांसि विहितान्यस्मिन् पुन र्यद्यपि
ग्राह्यं स्यात् कपिशादिकन्तु तदपि व्यामिश्रणात् साधयेत्॥ ५॥
सूत्रं पुण्यवधूकरै र्विरचितं सूक्ष्मं सुकार्पासजम्
ग्राह्यं तत् त्रिगुणं पुन स्त्रिगुणितं स्याद् यज्ञसूत्रादिषु।
मालादिग्रथनाय पट्टजमपि ग्राह्यं सुकोषोत्थितम्
सूत्रं स्वर्णमयं पुनः क्रिमथवा कल्पोदितं यत्र यत्॥ ६॥
आर्य्याणां वरणादिमत्क्रतिकृते वस्त्राणि शुद्धान्यथो
क्षौमादीनि यथोपयोगविहितान्यच्छिद्रजीर्णानि च।
रत्नानां * नवकञ्च पञ्चकमपि स्निग्धं स्ववर्णोज्ज्वलं
निर्दोषं हि समाददीत बलवान् दोषो हि तेषां मनाक्॥ ७॥
यच्चास्मिन्नुपयोगि वस्तु तदपि श्रीखण्डकाष्ठादिकं
स्निग्धग्रन्थिलकोटरान्यनिविडारक्तञ्च तत्रोत्तमम्।
पीठानि प्रविविक्तपादरुचिराण्यङ्गुष्ठलम्बोन्नता-
न्यायामेन करैकभाञ्जि चतुरस्राणीह वृत्तानि वा॥ ८॥
दीपान् पित्तलताम्रमृद्विरचितां स्तद्दीपवर्त्तीं स्तथा
वह्नीना मुपदीपनाय बहुशः शालादिकाष्ठानि च।
यान्यन्यानि यथास्वरूपरुचिरस्थेयानि वस्तूनि तत्-
सर्व्वं कोषगृहे परीक्ष्य विधिवत् यत्नात् समास्थापयेत्॥ ९॥

---

* मुक्तामाणिक्य वैदूर्य्य गोमेदोवज्रविद्रुमान्
पुष्परागं मरकतं नीलञ्चेतिविदुर्नव।

एवं कृतेऽथ मनुजो मनुदेवतात्मा
विद्यां विविक्त रमलाशय आशुकारी ।
शुश्रूषु रार्य्ययतिविप्रगवां विवाद-
पैशुन्यशून्य ऋजु रर्जिततो ऽबुद्धिः ॥ १० ॥

आपाततो विदितदेवतदङ्गतत्त्वो
दान्तोऽतिशान्तहृदयो विजिताक्षनिद्रः ।
आचार्य्यवत्तदनुजात्मजकामिनीषु-
प्रीतिप्रपन्नमति रुज्झितलोभमोहः ॥ ११ ॥

मातृतश्च पितृतोऽपि विशुद्धो दूर मुज्झितमनोभवगन्धः ।
नित्यकर्म्मकुशलोऽलसहीनो दीनदुर्गतजनेषु दयालुः ॥ १२ ॥

भोगेष्वलोलुपमनाः कमनीयमूर्त्तिः
श्रद्धालु रागमपथप्रतिपन्नतृष्णः ।
उल्काग्निदीपितशिरा इव सत्तड़ागं
वस्त्रप्रसूनफलकाञ्चनयुक्तपाणिः ॥ १३ ॥

उपेयाद्गुरुं कामलोभक्रुधेर्षामृषामोहमात्सर्य्यगर्व्वादिशून्यम् ।
स्मृतिज्ञं पुराणागमाम्नायतत्त्वप्रबोद्धारमुद्धारशक्तं भवाब्धेः ॥१४॥

दयाशील मार्य्यव्रतं स्वेष्टदेवांघ्रिपद्मद्वयैकान्तभक्तं वरिष्ठं ।
कुलीनं द्विजं स्वाश्रमाचारधर्म्मोपपत्तिक्षमं सत्तमं निर्म्मलाङ्गम् ॥१५॥

षड़ध्वषट्कावगन्तारमोहामनोवाग्भिरिष्टे मनौ सुप्रतीतम् ।
तदर्थप्रमुर्ज्जस्वलं कुण्डलिन्या गतिज्ञं मनःसंशयच्छेददक्षम् ॥ १६ ॥

उपपन्नममुं प्रसन्नचेता वचसाऽऽश्वास्य स शिष्यमार्य्यशीलम् ।
सविधे विविधक्रियासु युञ्जन् सुपरीक्षेत दिनैः कियद्भिरेनम् ॥१७॥

यदि तस्य जवात्सुशीलता तु स्फुटतामेति मनः परं प्रसीदेत्।
परिहृत्य तदैव संशयार्थाननुगृह्णीत गुरु र्मनुप्रदानैः॥ १८॥
क्वचिदस्य यदि क्वचित् क्रियासु व्यसनाद्याविलशीलतां स पश्येत्।
निजदुष्करकर्म्मसु प्रयोज्य प्रतिवेलं वचसा सुशिक्षयेत्तम्॥ १९॥
वर्षैकेण सुशिक्षितो द्विजशिशु र्दीक्षार्थमर्हो भवेत्
क्षत्रं वत्सरयुग्मकेन च तथा वर्षत्रयेणोरुजः।
शूद्रो वर्षचतुष्टयेन च पुनस्तत्रापि चेद्दृश्यते
तेषां दुर्विनयत्वमुग्रवचसा भूयोऽपि तान् शिक्षयेत्॥ २०॥
स्पर्शात् स्पर्शमणेर्यथातिमलिनं लोहं भवेत् काञ्चनं
तद्वत् श्रीगुरुसन्निधौ प्रतिवसन् शिष्यो भवेन्निर्मलः।
लब्ध्वा सद्गुणशालितामथ गुरुं सर्वात्मना संश्रयेत्
शिष्यः स्वार्थपरायणः, स च परीक्ष्यामुं गुरुर्दीक्षयेत्॥ २१॥
आदौ कालविशुद्धिमस्य विधिवत् शिष्यस्य विद्याद्गुरु-
स्तद्देशस्य च मित्रभाव मथ तद्देशाधिनाथस्य च।
सिद्धार्य्यादिभिरप्यमुष्य च मनोज्ञक्षैस्ततो मेलनं
सर्व्वेषां हि न शुद्धिरत्रसुलभा भाग्यात् क्वचिल्लभ्यते॥ २२॥
पूर्वमेव कालशुद्धिरत्र वीक्ष्य लिख्यते
सर्वमाशु साधयन्ति येन कालयोगतः।
सोऽपि सूक्ष्मतां यदैति दुर्विदो भवेत्तदा
तेन लक्षयामि तं तु माससुख्यलक्षणैः॥ २३॥
तपस्तपस्यौ मधुमाधवौ द्वौ नभान्द्रषोर्जौ सहसा सहेसे।
मासाः प्रशस्ता मलमासवर्ज्जं नचेतरे हि ग्रहणे मनूनां॥ २४॥

मधुः प्रसिद्धोऽपि निषिध्यते क्वचित्
मतान्तरे जेष्ठमुची उभावपि ।
तथा निषिद्धौ क्वचिदोषितौ मतौ
न वैष्णवे मन्त्रविधौ तदिष्यते ॥ २५ ॥

शुक्लः पक्षः सर्वदीक्षासु शस्तः कृष्णोऽपीष्टः पञ्चमीतः परश्च ।
वारौ शस्तौ शुक्रगुर्वोर्विशेषाद्गौणाश्चान्ये शौरिभौमादिवर्ज्जं ॥ २६ ॥

गलग्रहानध्ययनादिवर्ज्जिताः सर्वाः प्रशस्तास्तिथयश्च पक्षयोः ।
अतिप्रशस्तौ हरिवासरौ ततस्तयोस्तिथिर्द्वादश संमिता मता*॥२७॥

वारेषुशौरेस्तमसश्चवेलां विहाय तद्दत्तिथिषु प्रदोषम् ।
दग्धां तिथिं चापि तथा क्षयाहं दीक्षा विधेया विधिना विधिज्ञैः॥२८

† उत्तरात्रयरेवतीहरिरोहिणीगुरुवासव-
त्वाष्ट्रनैरृतपित्र्यमित्रभवित्तमारुतशङ्कराः ।
तारका इहपूजिताः पुनरश्विनीकररोहिणी-
पोढ़शीहरिमारुतोत्तरभानि शिष्याभिषेचने ॥ २८ ॥

आसु व्यपत्निधनवैरिभवर्ज्जमन्याः
शस्ताः, शशिग्रहगजेषुयुगान्यवर्ज्जम् । ‡
गण्डातिगण्डपरिघव्यतिपातशूल-
व्याघातवैधृतिपृथग्विहिताश्च योगाः ॥ ३० ॥

---

* शिताइति (घ) पुस्तके पाठः ।

† उत्तरफाल्गुनिः उत्तराषाढ़ा उत्तरभाद्रपदा ; हरिः श्रवणा, गुरुः पुष्या, ज्येष्ठा, चित्रा, मूला, मघा, अनुराधा धनिष्ठा, स्वाति, आर्द्रा, हस्ता, विशाखा ।

‡ नवमाष्टमपंचमचतुर्थद्वादशचन्द्रवर्ज्जं ।

छित्वा शकुन्यादिचतुष्कमेव
विष्टिं विशेषेण ततोऽपराणि ।
शस्तानि चास्मिन् करणानि तद्वत्
शान्तोग्रयोश्चोत्तरयाम्यमार्गौ ॥ ३१ ॥

लग्नः स्थिरोऽसौ त्रिषडायसंस्थैः पापैरुपेतोऽप्यथबन्धुवर्ज्जं ।
केन्द्रत्रिकोणोपगतैश्च सौम्यैः शान्ते मतौ शाम्यद्तोऽन्यदुग्रे ॥ ३२ ॥

स्त्रीदैवतेषु स्त्रिय एव लग्नाः पुंदैवतेषु प्रथिताः पुमांसः ।
क्रूरेषु सौम्येषु मनुष्वथैवं क्रूराश्च सौम्या इति केचनोचुः ॥ ३३ ॥

साधारणीकालविशुद्धिरेषा रव्यादिदेवेषु यथाविशेषम् ।
प्राहुश्च तत्तत्त्वविदः पुरस्ता त्तथात्र संक्षिप्य विविच्य वक्ष्ये ॥ ३४ ॥

सौरे मतौ माधवमार्गशीर्षौ गाणेश्वरे वाहुलमार्गमासौ ।
दौर्गे त्विषोर्ज्जौ शुच माघचैत्रौ हरे हरस्यापि नभस्तपस्यौ ॥ ३५ ॥

त्रीणित्रीणि शिते दिनानि सवितुर्विघ्नेशितुः शैलराट्-
पुत्र्याश्चक्रिणईशितुः प्रतिपदादीनि प्रशस्तानि च ।
कृष्णे पञ्चमवासराञ्च युगशः शस्तानि तत्तन्मनं
दद्या त्तत्तदहन्यथो रविशशिज्ञेज्यैकनेत्रेषु च ॥ ३६ ॥

रवेरुत्तरत्रीणि विघ्नस्य पुष्यानु-
राधा च चित्रा, शिवाया मघेन्द्रौ ।
समूलौ हरेरेवतीब्रह्म * विष्णू
हरस्यानिलार्द्रा धनिष्ठाः प्रशस्ताः ॥ ३७ ॥

---

* ब्रह्मा रोहिणी ।

सर्वत्र प्रवरा कवीज्यसहिता चैत्रामलद्वादशी
सा चेदन्यविशिष्टमासि पतिता शस्ता मता वैष्णवे ।
शैवेऽङ्गारकयुक्चतुर्दशतिथिः शस्ता शिता फाल्गुने
कृष्णापीष्टतमाथ शान्तिकमनौ भौमान्वितैषाष्टमी ॥ ३८ ॥
हैरम्बे शशिभौमवारसहिता माघी चतुर्थी शिता
सौरे शुक्लगता स्ववासरयुता संक्रान्तिरेवोत्तरा ।
एवं मन्त्रविशेषतो निगदिता योगादिमे दुर्लभा
लभ्यन्ते यदि साधकस्य सुकृतैः किन्तस्य नो कुर्वते ॥ ३९ ॥
इत्यादिशुद्धसमयस्य तथाप्यलाभे
तज्जन्ममासरविसंक्रमणेऽयनादौ ।
किम्वा युगादिविषुवेषु तथोपरक्ते
चन्द्रे रवौ क्रमशताधिफलात्र दीक्षा * ॥ ४० ॥
न मासतिथिवासरर्क्षविधुजादिदोषः क्वचि-
न्नदेशनियमादिकं विधुरविग्रहे मन्त्रिणां ।
शिवादिषु रविग्रहो हरिमनौ च चन्द्रग्रहः
प्रशस्यतद्दतोऽधिकं सपदि सुप्रसन्ने गुरौ ॥ ४१ ॥
वक्ष्यमाणकूर्मचक्र एककोष्ठमध्यतो
देशदण्डधारसाध्यसिद्धमन्त्रमन्त्रिणाम् ।
आह्वयादिवर्णएव यस्य यत्र दृश्यते
तस्य तस्य मैत्रमस्ति तन्मुखेऽतिदुर्लभम् ॥ ४२ ॥

---

* जन्ममाससंक्रान्त्यादिक्रमेण शतगुणेनाधिकं फलं यस्याः स्यात्तादृशी दीक्षा-
त्मक भवतीयर्थः ।

देशशुद्धिरीरितेयमिष्टमन्त्रमन्त्रिणां
*तत्र यद्विशेषमस्ति कालदेशयोगतः।*
तद्वदामि भूविशेष मून मुत्तरोत्तरं
यत्रयत्र दीक्षितो हि प्राप्नुयात्तथा फलं ॥ ४३ ॥
काशीप्रयागकुरुपुष्करसप्रभास-
गङ्गादिपुण्यसरिदावृतपुण्यदेशे।
दीक्षां करोतु तदभावतइष्टदेव-
गुर्वग्निगोष्टहचलच्छदविल्वमूले ॥ ४४ ॥
धात्रीतले च तुलसीविपिने नदीनां
सिन्धोश्च रोधसि महीधरकन्दरासु।
कुर्वीत चेदिह नरो निजमन्त्रदीक्षां
नो कूर्मचक्रगणनां खलु तत्र कुर्य्यात् ॥ ४५ ॥
विष्णौ तु माथुर सतिप्रवरं शिवे तु
काशी, तथा गिरिभुवो भुवि कामरूपम्।
कोणार्कएव दिवसाधिपतौ, गणेशे
नेपालपीठ मुदितं सकलं विशेषात् ॥ ४६ ॥
इतिकालविशेषदेशशुद्धिर्गदिता श्रीगुरुवाक्यशिक्षया मे।
अथ चक्रविधिं क्रमेण वच्ये मनुना साधकनाममेलनाय ॥ ४७ ॥
दश तानि च तत्रपञ्चमुख्यान्यपराण्येव हि गौणसंज्ञितानि।
इह चक्रफलं विवेक्तुमादौ विदधे साधकनाम निर्विवादम् ॥ ४८
नाम प्रसिद्धं पितृदत्तमेके नाक्षत्रमेके गुरुदत्तमेके।
वदन्ति तत्र प्रसभं प्रसुप्तो जागर्त्ति येनेह तदेव शस्तम् ॥ ४८ ॥

यो यं मंत्रं भाजनं स्याद्ग्रहीतुं
तन्नाम्ना तं शोधयेन्नान्यथैतत् ।
तस्माद्योग्यायोग्यबोधार्थं वक्ष्ये
यस्मिन्मन्त्रे यो भवेद्वाधिकारी ॥५०॥

मन्त्राणां ग्रहणे प्रदानविषये वर्णोत्तमा ब्राह्मणाः
सर्वेषामधिकारिणः स्यु रितरे गृह्णन्ति, यच्छन्ति न ।
शूद्राश्च द्विजयोषितश्च विधिना गृह्णीयुरिष्टान्मनून्
तारव्याहृतिठद्वयान्त्यमजपावेदोक्तमन्त्रं विना ॥ ५१ ॥

वर्णतस्तदधिकारितेरिता भिद्यते च किल सा स्वभावतः ।
यद्विलंघ्य गुणवर्गमञ्जसा वर्वृतीति निजभावसंस्कृतः ॥ ५२ ॥

यो यत्सत्त्वः स त्वमुं मन्त्रमिष्टं विश्रब्धात्मा सेवते लब्धदीक्षः ।
तस्माद्भेदः सत्त्वभेदादमीषां सत्त्वात्मानो राजसा स्तामसास्ते ॥५३॥

नित्यं शाक्तास्तामसा, गाणपत्याः-
सौराः शैवा राजसा नित्यमेते ।
सत्त्वोद्रेकाद्वैष्णवाः सात्त्विकाःस्यु-
र्ब्रह्मज्योतिःसच्चिदानन्दजांशैः ॥ ५४ ॥

सर्वासु दीक्षास्वधिकारिणः स्युः सर्वे मिथः कारणतः कुतश्चित् ।
अङ्गीष्टमन्त्रो ह्यपरेतदङ्गान्यङ्गाङ्गिभावा दिहनास्तिदोषः ॥ ५५ ॥

सकामनिष्कामतया च केचि-
देकान्तसंकीर्णतया भजन्ते ।
नैकान्तभक्तोऽन्यमनुं कदाचित्
गृह्णीत सर्वागमडिण्डिमोऽयम् ॥ ५६ ॥

सिद्धारिराश्यकडमस्य धनोड संज्ञा-
न्यंशतिनाडिक कुलाकुलषट्पदानि।
वर्णाश्रयेन सहितानि दशैव चक्रा-
स्तेभिर्विशोधितमनो ग्रहणा हि सिद्धिः॥ ५७॥
एषां स्वरूपाख्यथ तत्र वर्णन्यासक्रमं तत्र फलाफलं च।
संदर्शयामि क्रमतो दशानामादौ तु सिद्धारिपदस्य पश्य॥ ५८॥
प्राक्प्रत्यगग्रा भुवि पञ्च रेखा याम्योत्तराग्रा विलिखेच्च पञ्च।
कोष्ठेषु तत्षोडशसु क्रमात् स्यादिदिग्गतं कोष्ठचतुश्चतुष्कम्॥५९॥
लिखेच्चतुष्कोष्ठचतुष्टयस्य कोष्ठेष्वथाद्येद्वितये तृतीये।
ततश्चतुर्थेऽखिलमातृकार्णानावर्त्य सिद्धादिकमत्र विद्यात्॥ ६०॥
विद्याक्षराण्यत्र समस्तकोष्ठेष्वाद्ये तृतीये चतुरक्षराणि।
भवन्ति तत्राकथहादिवर्णादारभ्य पश्येल्लिखनक्रमेण॥ ६१॥
यस्मिंश्चतुष्केऽर्हति साधकस्य नामादिवर्णः खलु सिद्धमेतत्।
साध्यं द्वितीयं च ततस्तृतीयं सुसिद्धमन्त्यं तदरिः क्रमेण॥ ६२॥
यस्मिन्मन्त्रादिवर्णः प्रभवति स मनुः प्राप्नुयात्तस्य संज्ञां
प्रादक्षिण्येन तस्मात्फलमनुगणयेत् सिद्धतोऽथ्यन्तमेव।
सिद्धः कालेन सिध्यत्यधिकजपहुतादिक्रियाभिश्च साध्यं
सद्यः प्राप्तया सुसिद्धो रिपुरखिलसुखं निश्चिपंस्तं निहन्ति॥ ६३॥
इन्द्राग्निरुद्रनवमाग्रसरेषु तेषां
प्रत्येककोष्ठकुहरेषु निरूप्य वर्णान्।
सिद्धादिकं विगणयन् फलमादिशेच्च
भूयश्चतुश्चतुरिति क्रमतः पुरोवत्॥ ६४॥

सिद्धस्य सिद्ध स्त्रिपुरश्चिक्रियाभिः सिद्धस्य साध्यो द्विगुणाभिराभिः ।
तदर्द्धतः सिध्यति तत्सुसिद्धो बन्धून् श्रुतः संस्तदरिर्निहन्ति ॥३५॥
साध्यस्य संदिग्धफलो हि सिद्धो
निरर्थकः स्यात् खलु साध्यसाध्यः ।
प्राक्सेवया सिध्यति तत्सुसिद्धो
ज्ञातीन् निहन्त्याशु च साध्यवैरी ॥ ६६ ॥
सुसिद्धसिद्धोऽर्द्धजपेन सिध्येत्
पुरश्चिक्रयैकेन सुसिद्धसाध्यः ।
तत्क्षणादेव हि तत् सुसिद्धः
सुसिद्धवैरि विनिहन्ति जातिम् ॥ ६७ ॥
अरेश्च सिद्धोविनिहन्ति पुत्त्रं पुत्त्रीं च साध्यो गृहिणीं सुसिद्धः ।
समूलमात्मान मरिस्ततोऽमुं नरो न सेवेत विदन् कदाचित् ॥६८॥
सिद्धार्णः खलु वान्धवः स च जपै र्होमादिना साध्यते
साध्यार्णः किल सेवकः सफलति प्रायः पुरश्चर्य्यया ।
पुष्णाति प्रसभं शुभं तदखिलं पोष्टा सुसिद्धाक्षरः
शत्त्रर्णो वत घातकस्तदखिलं हन्तीति केचिज्जगुः ॥ ६८ ॥
सिद्धारिचक्रस्य मया व्यवस्था
प्रकीर्त्तिता मुख्यतयेह पूर्व्वम् ।
क्रमादितोऽनन्तरसंग्रहेऽस्मिन्
राश्यादिचक्राणि विविच्य वक्ष्ये ॥ ७० ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्व्वस्वे कालशुद्ध्यादिमन्त्रानुकूल्यकथनोनाम चतुर्थः संग्रहः ॥ ००० ॥

पूर्वं सिद्धारिचक्रस्य व्यवस्था काचिदीरिता ।
अतःपरं विधानेन राशिचक्रं निरूप्यते ॥ १ ॥
रेखाद्वयं प्राक्चरमायताग्रं स्वतूर्य्यभागान्तरितं मिथस्तत् ।
याम्योत्तराग्रं च तथा विधाय कोणेषु तिर्य्यग् विलिखेच्चतस्रः ॥२॥
तेषु द्वादशकोष्ठकेषु विलिखेन्मेषादिराशिक्रमाद्
वर्णान् वेदगुणाग्निपञ्चभुजयुक्संख्यान् स्वरान्षट्सु च ।
शेषे पञ्चसु पञ्चवर्गक मथान्त्यस्थाच्चराण्यन्तिमे
* कन्यायाममसोः पदे, शषसहक्षार्णान् पुनर्विन्यसेत् ॥ ३ ॥
यस्मिन् साधकजन्मराशिरथवा तन्नाममूलाक्षरं
तल्लग्नं हि ततो धनं च सहजं बन्धुं सुतं वैरिणम् ।
पत्नी मन्त्रकधर्म्मकर्म्मसहितावायव्ययौ च क्रमा-
ज्जानीयाद्गणयन् द्वितीय भवना त्तद्द्वादशान्तावधि ॥ ४ ॥
मन्त्रश्चेल्लग्नपः स्यात् सुखमतिकुरुते वित्तलाभं द्वितीये
सौभाग्यं तत्तृतीये तदनु परिभवं पञ्चमे मन्त्रसिद्धिम् ।
षष्ठे प्राणान्तरोगं वहुधनजनतां सप्तमेऽथाष्टमेऽसौ
मृत्युं शेषेषु कीर्त्तिं धृति मतिविभवं मानभङ्गं क्रमेण ॥ ५ ॥
केचिद्वदन्ति रिपु रत्र भवेच्चतुर्थषष्ठाष्टमव्ययचतुर्थगतश्च मन्त्रः ।
तस्माद्विवर्जय इतरोऽत्र विधौ प्रशस्तः
स्याद्वान्धवादिविहितेषु पुनर्व्यवस्था ॥ ६ ॥

---

* कन्यायाममसौ पदे इति (ग) पुस्तके पाठः ।

एकपञ्चनव बान्धवाः स्मृता युग्मषट्दशम एव सेवकाः ।
वह्निरुद्रमुनयस्तु पोषका द्वादशाष्टचतुरस्तु घातकाः ॥ ७ ॥

यो बन्धुर्भवति स रक्षणं विधत्ते
सर्वार्थान् भुवि वितनोति सेवकाख्यः ।
पुष्टिश्रीविभवयशांसि पोषकाख्यः
सर्वार्थानपि विनिहन्ति घातकाख्यः ॥ ८ ॥

तद्राशिचक्रं त्रिविधं त्रिनाभि स्वचक्रमूर्द्धं धनुरादि दैवम् ।
पैत्रं भुवश्चक्रमरण्यपादिमेषादिभूचक्रमिदं नराणाम् ॥ ९ ॥

धनुरादिचतुर्षुदैववर्णाश्रथसिंहादिषु पैत्रका स्ततोऽधः ।
तदधोऽजमुखेषु मानवार्णा मनुरुद्धेन शुभो * वदन्ति केचित् ॥१०॥

राशिचक्रमिदं प्रोक्तं सर्वतन्त्रानुसारतः ।
अथाकडमचक्रस्य कलयामि निरूपणम् ॥ ११ ॥

रेखाद्वयं पूर्व्वपरेण कुर्य्यात् तन्मध्यतो याम्यकुवेरभेदात् ।
महेशरक्षोऽधिपतिक्रमेण तिर्य्यक् तथा वायुहुताशनेन ॥ १२ ॥

द्विषट्पदेषु प्रथितेषु तेषु न्यसेदकाराद्यनपुंसकार्णान् ।
मेषादितो दक्षिणतो वृषान्त मावर्त्तयन्नेकक्रमन्तिमान्तम् ॥ १३ ॥

साधकनामाद्यक्षरकोष्ठात्सिद्धस्थसाध्यसुसिद्धरिपूंश्च ।
त्रिस्त्रिरवेक्ष्य मनुप्रथमार्णौ यत्र विभाति ततः फलमूह्यम् ॥ १४ ॥

एकशरग्रहसद्मसु, सिद्धो, वाग्टतुदिक्षितवेश्मसु, साध्यः ।
बह्निऋषिरुद्रग्टहेषु सुसिद्धो, वेदमतङ्गमभानुषु वैरिः ॥ १५ ॥

---

* "शुभा" इति (घ) पुस्तके पाठः ।

सिद्धमनुः फलतीह विलम्बं
साधकसिद्धिषु साध्यउदास्ते ।
द्राक्फलमेव ददाति सुसिद्धो
हन्ति रिपुः स्वमतो न स सेव्यः ॥ १६ ॥

अकडमचक्रमिदं मनुशुद्धेर
प्रथितमतः कथितं सुविचिन्त्य ।
अथ कथयाम्यहमृणधनचक्रं
कलयन्ति येन धनित्वमृणित्वम् ॥ १७ ॥

रेखासप्तक मुत्तरान्तकदिशोस्तिर्य्यक् तथा द्वादश
प्राक्प्रत्यक्शिखरा विलिख्य कलयेत् कोष्ठानि षष्टिश्च षट् ।
तेषां षट्सु च पंक्तिषु प्रथमतः सर्वोपरिष्टाल्लिखेत्
साध्याङ्कानिह साधितानथ तथा तान् साधकाङ्कानधः ॥ १८ ॥

मध्ये पंक्तिचतुष्टये स्वरहलोऽन्त्यं वर्जयित्वा लिखे-
दादौ पञ्चसु कोष्ठकेषु युगशस्तेषां सवर्णस्वरान् ।
एकारादिषडेकमेक मनु तत्पंक्तित्रये व्यञ्जना-
नेकैकं कठवादिकांश्चटफहान्तान् देशिकेन्द्रः स्फुटम् ॥ १९ ॥

ग्रहिष्यमाणो मनुरेष साध्यः स चेत् पुरा जन्मनि सिद्धिदोऽभूत् ।
तदा धनी चेतरथा ऋणी स्यात्तद्बोधकाङ्कानिह दर्शयामि ॥ २० ॥

साध्यार्णे मनुवह्नियुग्मवितिथिस्कन्दास्यवेदाग्निना-
गाष्टाङ्कप्रमिते हृते च वसुभि, र्लब्धाः सुर रङ्का अमी ।
षट् षट् षट्खहुताशवेदयुगखाकाशान्तरोचानला
एतानेव तदूर्द्ध्वपंक्तिकुहरेष्वेकैकशः स्थापयेत् ॥ २१ ॥

* दिग्वह्न्यर्षियुगाष्टवह्निमनुनागाम्नायचक्रानलैः
संख्यातेऽथहृते च साधकलिपौ भूयोऽष्टभिः पूर्ववत् ।
लभ्यन्ते युगपञ्चपञ्चखनभःपञ्चेन्दुशून्याम्बुधि
श्रुत्येकप्रमिताश्च तानथ सुधी रङ्कानधः स्थापयेत् ॥ २२ ॥
वर्णान् साध्यमनोः पृथक् स्वरहलां रूपेण विश्लिष्य तान्
पश्ये च्चक्रगकोष्ठकेष्वकठवादिष्वेकमेकं पुनः ।
मन्त्रार्णः खलु यत्र यत्र भवति व्यामिश्र्य तस्योर्द्ध्वगान्
साध्याङ्कानवहृत्य तांश्च वसुभिः शेषाङ्कमास्थापयेत् ॥ २३ ॥
एवं साधकनामवर्णहलचो विश्लिष्य कोष्ठेषु तान्
वीक्ष्याधःस्थितसाधकाङ्कनिकरं संमिश्र्य प्राग्वद्धरेत् ।
तत्शेषं त्वथ साध्यशेषमुभयं चालोकयेद्द्योऽधिको-
मन्त्रो वाप्यथ साधकश्च स ऋणी न्यूनो धनीति स्मरेत् ॥ २४ ॥
मनुर्यदि धनी भवेन्निखिल मेव तन्निष्फलं
मनुर्यदि भवेदृणी सकलवाञ्छितं पूरयेत् ।
धनी तु मनुजः शुभो न स ऋणी शुभायेष्यते
समे तदुभयोः फलं सकलमेव तुल्यं मतम् ॥ २५ ॥
एकाधिके मन्त्रवता मृणांके
पूजादिजापान्मनु रेति सिद्धिम् ।
द्वाभ्यां त्रिभि र्हि त्रिपुरक्रियाभि-
र्नातोऽधिके सिध्यति जातु मन्त्रः ॥ २६ ॥

---

* दिक्चंद्रर्षि इति (ग) पुस्तके पाठः ।
पूर्वत्वमग्रशब्दे न दश च चंद्रशब्दे न एकक मेव निर्दिष्टं ।

अथवा निजनाममूलवर्णान्वितकोष्ठान्मनुमूलवर्णकोष्ठम्।
गणयेदिह कोष्ठकानि यावन्तस्तावान् भवतीह साधकाङ्कः ॥२७॥
एवं साध्याद्वर्णतः साधकान्तं
साध्याङ्कः स्यात् कोष्ठसंख्यानुसंख्यः।
त्रिघ्नं कृत्वा सप्तभिस्तद्द्वयं च
हृत्वा तस्मिन् योऽधिकः स्यादृणी सः ॥ २८ ॥
साध्यस्वरव्यञ्जनभिन्नवर्णान् द्वैगुण्यमापाद्य च साधकार्णैः।
संयोज्य तद्वद्वसुभिश्च हृत्वा शेषं तु साध्याङ्कमिति प्रतीयात् ॥ २९
तथाकृतान् साधकनामवर्णान्
पुनर्द्विरावृत्य गजैश्च हृत्वा।
जानीत साध्यस्य च साधकस्या
धिको यदङ्कः स ऋणीति केचित् ॥ ३० ॥
प्राहुः केचन साध्यसाधकलिपिव्यक्तस्वरव्यञ्जनै-
स्तत्कोष्ठैरुपलक्षिताङ्कनिकरं शून्यानि चोपर्य्यधः।
संस्थाप्याथमिथ स्तयोर्गणनयांऽकेभ्योऽथ शून्येऽधिके
जानीयादृणवन्तमेव धनिनं तत्शून्यतोऽङ्केऽधिके ॥ ३१ ॥
ऋणधनचक्रमिदं कथितं मे बहुषु विविच्य सुधीष्ववधाय।
उड़ुमयचक्रमथक्रमलब्धं प्रथितमथो कथयामि यथावत् ॥ ३२ ॥
याम्योत्तरायततया विलिखेच्चतस्त्रः
प्राक्प्रत्यगग्ररुचिराश्च दशैव रेखाः।
तत्र त्रिपंक्तिललितेषु भकोष्ठकेषु
विन्यस्य भानि विलिखेत् क्रमतोऽक्षराणि ॥ ३३ ॥

पञ्चैकत्राब्धिरूपावनिभुजशशियुग्युग्मभूयुग्मसंख्या-
युग्मैकद्वित्रिरूपत्रयवनिशशिशशिद्विगोकपञ्चाग्निवेदाः ।
अश्विन्यादिक्रमेणाक्षरमिह गदितं शेषभे विन्दुसर्गौ
जन्म नक्षत्रतो वा तदनवगमने नामतो वा गणेयम् ॥ ३४ ॥
अथो जन्मसंपद्विपत्क्षेमसंज्ञा-
स्ततः प्रत्यरिः साधको घातकश्च ।
ततो मित्र मन्त्रोऽतिमित्रं च तत्र
विरावृत्य मन्त्रावधि, स्वर्क्षकोष्ठात् ॥ ३५ ॥
शशाङ्कद्विवेदर्त्तुनागांकसंस्थो
यदि स्यान्मनुः साधकः सिद्धिमेति ।
त्रिवाणर्षिगस्त्वन्नकिंचित् शुभं स्यात्-
विशेषादिमे नामतुल्यं फलन्ति ॥ ३६ ॥
इदं मतं चेत् सकलागमानां प्रपञ्चसारस्य मते तथापि ।
नक्षत्ररेखाक्रमवर्णसंख्या विलिख्यते तत्कृतजातिमैत्री ॥ ३७ ॥
पञ्चेन्दुत्रिचतुः शशीन्दुभुजसंख्यातान् रदान्तान् स्वरान्
कादीन् चक्रभुजद्विचक्रभुजयुक्पञ्चैकपञ्चानलान् ।
चन्द्राग्नीन्दुशशीन्दुपञ्चधरणीपञ्चाग्निसंख्यान् क्रमा-
द्धान्तानन्त्यपदेऽथ पृषणि पुनस्तौ विन्दुसर्गौ लिखेत् ॥ ३८ ॥
जानीत जन्मादिफलं पुरोवद्-
यथोदितं तैर्नवभिश्च भेदैः ।
जात्यादिशुद्धिं गणये त्ततोऽसौ
जातिर्द्विधा सा गणयोनिभेदात् ॥ ३९ ॥

पूर्वोत्तरात्रयविधीशयमा मनुष्या
वाजोऽज्यशायुकरमित्रहरीन्द्रदित्यः।
सान्त्याः सुरा, अथ धनेन्द्रमघाविशाखा-
मूलाग्निसर्परविपाशधराश्च दैत्याः॥ ४०॥
साजात्ये सकलं फलत्यथ नरो देवं बलात् सेवते
देवस्तुष्यति सेवया नर मथो दैत्यो नरं खादति।
दैत्या न्ना च बिभेति देवदनुजौ नित्यं विपक्षौ * मिथः
संचिन्त्य व्यवहारतः फलमिह ग्राह्यो मनुः साधकैः॥ ४१॥
अश्वेभाजभुजङ्गसर्पसरटामार्जारिकानाकुली-
मूषामूषिकरुद्रयानमहिषव्याघ्रायमारोहणम्।
व्याघ्रो रणोहरिणोऽश्ववानरहरिः शाखामृगस्तोहया-
मर्त्योगौः करिणोति साधु कथिता नक्षत्रयोन्यःक्रमात्॥ ४२॥
गोव्याघ्रं गजसिंहमश्वमहिषं श्वाजंच बभ्रूरगं
वैरं वानरमेषकं पशुनरं तद्वद्बिडालेन्दुरू।
लोकोयव्यवहारतोऽखिलमिदं बुद्ध्या विविच्य स्वयं
रक्षोयान्मनुमेव मेष गदितो नक्षत्रचक्रक्रमः॥ ४३॥
चन्द्रस्य सूर्य्यस्य तथैव वक्के-
रंशाच्च तेषां समवायतश्च।
वर्णानि जातानि यतस्ततोऽस्मिन्
मन्त्रांशचक्रं कथयामि तावत्॥ ४४॥

---

* "द्विषन्तौ इति (घ) पुस्तके पाठः।

चतुःकोष्ठे चक्रे लिखतु निखिलार्णान् नमसो
द्विषट्संख्यावृत्त्या तदनु गणयेत् साधकलिपेः ।
विधुं सूर्य्यं वह्निं विधुरविशुचीनन्तिमपदे
फलं विद्यात् सिद्धादिभि रिह पुरोव द्विमलधीः ॥ ४५ ॥
चन्द्रः शीतमृदुप्रकाशकतया सिद्ध श्चिरात् सिध्यति-
साध्य स्तत्र रवि स्ततोऽधिकतया होमार्चना-जापतः ।
वह्नौ रात्रिदिवाप्रकाशकतया शीघ्रं सुसिद्धाभिधः
शेषोऽरिः सकलं निहन्ति कुशलं तत् सन्निपातागतः * ॥ ४६ ॥
इत्यंशचक्रं कथितं समासा त्त्रिनाड़िचक्रक्रम मीरयामि ।
विद्धेन यस्मिन् निजनामभेन फलाफलं मन्त्रिवरस्य विद्यात् ॥ ४७ ॥
सप्तविंशतिमण्डलानि विलिखेत् पंक्त्यैकया भूतले
तत्रास्तः क्रमशोऽश्विनीप्रमुखतो नक्षत्रपंक्तिं न्यसेत् ।
तां नाड़ीत्रितयेन सर्पवपुराकारेण संवेधयेत्
नाड्य स्ता सुरगान्तकानलमुखा भाद्रद्वयान्त्याढ़काः ॥ ४८ ॥
नक्षत्रं तु विचिन्त्य नामलिपितो नक्षत्रचक्रोदितं
भद्रं स्या मनुमन्त्रिणोश्च यदि भं तद्भिन्ननाड्यां स्थितम् ।
एकस्यां यदि मन्त्रमन्त्रिगुरवो नक्षत्र स्रासते
द्वेषो रुग्मरणं क्रमेण च भवेन्नाड़ीत्रये मन्त्रिणः ॥ ४९ ॥
त्रिनाड़िचक्र मीरितं पिनाकिवक्त्रनिर्गतम् ।
अथोच्यते कुलाकुलं विगाहितुं कुलाकुलम् ॥ ५० ॥

---

* सन्निपातोद्यतः इति (ग) पुस्तके ।

वायुग्निक्षितिजलखानि पञ्चभूतान्येभ्योऽभूममनुजननी हितत्ववर्णा ।
तद्वर्णाद्यसतुमनोजवाणपंक्तिष्वेकैकं दशदशकोष्ठभाजि चक्रे ॥ ५१ ॥
पंक्तीनां प्रथमपदेषु पञ्चह्रस्वान्
दीर्घां स्तच्चरमपदेष्वथ क्रमेण ।
विन्द्वन्तां स्तदनुपदेषु * सन्धिवर्णाम्
कादीन् क्षावधि शरसंख्यया हलश्च ॥ ५२ ॥
अत्रादिपंक्तौ कथिता अआएवर्गादिवर्णा मरुतो यषौ च ।
द्वितीयपंक्तौ तु तथा इईऐ वर्गद्वितीयाश्च रसौ कृशानोः ॥ ५३ ॥
तृतीयपंक्त्या ववनि रुऊओलहान्तका वर्गतृतीयवर्णाः ।
चतुर्थपंक्तौ स्यु रपां ऋ ॠ औ चतुर्थवर्णा वलसंयुताश्च ॥ ५४ ॥
तदन्त्यपंक्तौ तु तथा ऌ ॡ अं वर्गान्तवर्णा नभस श्च शक्षौ ।
यद्येकभूतं मनुमन्त्रिणोश्च नामाक्षरं स्यात् शुभदं कुलं तत् ॥ ५५ ॥
इतोऽन्यथा चेदकुलं तयोः † स्या त्तत्रापि मित्रारिफलं विचिन्त्य ।
मैत्री मिथश्चेत् कुशलं तयोः स्या द्वैरं यदि स्या दुभयोर्विनाशः ॥५६॥
क्षितेर्जलं मित्र मरिः समीरो जलस्य भूमिश्च मरिः कृशानुः ।
अग्नेः सुहृद्वायु ररिर्जलं च वायो ररिर्भू रनलः सहायः ॥ ५७ ॥
नारिर्न मित्रं नभसोऽस्ति किंचिद् विरोधि सर्वस्य हि तन्नभो यत् ।
मित्रत्वमेवं मनुमन्त्रिणोश्चेत् शुभं फलं स्या न्न शुभं विरोधे ॥ ५८ ॥
इतिकुलाकुलचक्र मुदीरितं तदनु षट्पदचक्र मुदीर्य्यते ।
यदुदरच्छदगा निजनामतो गणयितव्य मनुक्रमतोऽखिलम् ‡ ॥ ५९ ॥

---

* दीर्घानन्तर कोष्ठेषु । † तयोः—मनुमन्त्रिणोः । ‡ अखिलं फलाफलं ।

शक्रेशयो * र्वरुणराक्षसयो श्च मध्ये
वह्नीन्द्रयो र्वरुणमारुतयो श्च तिर्य्यक्।
रेखाद्वयं तत उदग्यमदिग्गतैकां-
संलिख्य तद्विशिखरार्पितषट्दलानि † ॥ ६० ॥
कृत्वा लिखेदनमसोऽखिलमातृकार्णा
ना ‡ वर्त्तय पत्रजठरेषु पुरन्दरादौ §।
प्रत्येकमष्टलिपियुक्तदलेषु तेषु
नामादिवर्णदलतो गणयेत् क्रमेण ॥ ६१ ॥
आत्मच्छदोदरगते मनुमूलवर्णे
भद्रं भवेत्तदनु वित्तहृति र्विभूतिः।
बन्धुक्षयः सकलकर्मसु संशयाप्तिः
सर्वार्थहानि रितरेषु फलानि च स्युः ॥ ६२ ॥
इति षट्पदचक्रस्य व्यवस्था सम्यगीरिता।
वर्गचक्रमथो वक्ष्ये मितारित्वविविक्तया ॥ ६३ ॥
प्राक्प्रत्यगग्रा भुविपञ्चरेखा याम्योत्तराग्राश्च विलिख्य तिस्रः।
कोष्ठाष्टकस्यादिपदेऽथ तस्य न्यसेत् स्वरान् षोड़श सर्गशेषान् ‖ ॥६४॥

---

* पूर्व्वेशानयोर्मध्यादारभ्य नैऋतपश्चिमपर्य्यन्तं एकांरेखांविलिख्य पूर्व्वाग्नेययोर्मध्यात् पश्चिमवायव्यमध्यपर्य्यन्तमेकांरेखामेवंतिर्य्यक् रेखाद्वयं विलिख्य उत्तरदक्षिणयोरायता च एकारेखा विलेख्याइत्यभिप्रायः।

† द्वाभ्यांशिखराभ्यां अर्पितान्यारोपितानि षट्पत्राणि, कृत्वालिखेदितिपरतनेनान्वयः। ‡ विन्दुविसर्गवर्ज्जितान्।

§ पुरन्दरादौ—पूर्व्वादितः।

‖ विसर्गान्तान्।

कचटतपयशाद्यान् सप्तवर्गान् क्रमेण
प्रतिपदकुहरेषु न्यस्य सप्तस्वथैषाम् ।
उपरि च तदधोशां स्तार्क्ष्यमार्जारसिंहान्
श्वखरविषधराखू नागमेषौ निदध्यात् ॥ ६५ ॥

स्वजातितः स्यात् परमप्रमोदो वैरं च मित्रत्वमतः परेषु ।
मित्रं सजाति मनुजं मनुश्चेत् करोति सौभाग्यसमृद्धिभाजम् ॥ ६६ ॥

परस्परं सिंहभुजङ्गयो र्बिड़ालदन्तिनो र्मूषिकमेषयोरपि ।
श्वपक्षिणो रेव मजस्रमित्रता तया स्वरारोग्यधनायुरुन्नत्तयः ॥ ६७ ॥

पतङ्गसर्पं मिथ ओतुमूषिकं सिंहद्विपं श्वाज मिमे हि वैरिणः ।
नरस्य कुर्वन्ति निरस्य वाञ्छितं भयान्यधोगा मरणानि चोर्द्धगाः ॥६८॥

इतिनिगदित मेतद्वर्गचक्रावसानं
मनुमनुजविशुद्धै चक्रवर्गं यथावत् ।
इह रूणधनचक्रं किं च सिद्धारिचक्रं
द्वय मखिलमनूनां शुद्धिसाधारणं हि ॥ ६८ ॥

यस्मिन्मन्त्रे यत्प्रशस्तं विशेषा च्चक्रं वा स्यात् शुद्धये मान्त्रिकाणाम् ।
ये चाशोध्याः सिद्धमन्त्रा अमीभिस्तच्चान्यस्मिन् संग्रहे वच्मि सर्वम् ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्वस्वे चक्र-सिद्धिनिरूपणं नाम पञ्चमः संग्रहः ॥ ० ॥

---

गोपालेऽकडमं शिवे त्रिधमनो (१) ब्रध्ने च राश्याह्वयम् ।
विघ्ने षट्पदमम्बिकामनुवरे नक्षत्रचक्रं तथा ॥
लक्ष्म्यांचापि कुलाकुलं तदितरेष्वंशाह्वयं (२) यक्षिणी-
विद्यासु प्रवदन्ति वर्गजमिति प्राज्ञो विशेषाद्बुधाः ॥ १ ॥
केचित् प्राहु र्वैष्णवे तारशुद्धिं शैवे मन्त्रे (३) कोष्ठशुद्धिं विशेषात् ।
तारामन्त्रे त्रैपुरे तारशुद्धिं मन्त्रेष्वन्येष्वेव सिद्धारिशुद्धिम् ॥ २ ॥
मन्त्रास्तु त्रिविधा हि वेदविहिता स्तन्त्रोदिताः शावरा
स्तत्रा (४) द्या विधिवक्त्रनिर्गततया ते नित्यशुद्धा मताः ।
(५) अन्या आधुनिका न शुद्धिविषया ये तान्त्रिका स्ते द्विधा
सिद्धासिद्धतया नृणां निगदिताः शोध्या असिद्धा इह (६) ॥ ३ ॥
ये चैकार्णा एकबीजार्णरूपा बीजाभ्यां वानेकबीजै र्युताश्च ।
ये वा क्लीबाःकूटमन्त्राः सपिण्डा(७) मालामन्त्रा ये च वा स्वप्नलब्धाः ॥४
श्रीरामस्य श्रीनृसिंहस्य वाजिग्रीवस्यादिक्रोड़रूपस्य (८) मन्त्राः ।
वक्षे रर्कस्याथ गोपालमन्त्राइत्याद्या ये सिद्धमन्त्रा विशेषात् ॥ ५ ॥

---

(१) त्रिनाड़ीकं । ब्रध्ने—सूर्य्ये । विघ्ने—गणेशे ।

(२) यक्षिणीविद्यासु—धनदादिषु । (३) कोष्ठशुद्धिं—सिद्धारिशुद्धिं ।

(४) आद्या वैदिकाः । (५) अन्याः शावराः ।

(६) तान्त्रिकामन्त्राः सिद्धाअसिद्धा इति द्विविधाः । तत्रासिद्धाः खलु शोध्या इत्यर्थः ।

(७) सपिण्डाः पिण्डबीजसहिताः । स्वप्नलब्धा वैदिकाएवग्राह्याः ।

(८) आदिक्रोड़रूपस्य—आदिवराहरूपस्य ।

नारायणाष्टाक्षरमन्त्रवर्ज्यं स्तथैव पञ्चाक्षर ईश्वरस्य ।
गणेशितुः षडलिपि वक्रतुण्ड इमेच सिद्धारिपदे न शोध्याः ॥ ६ ॥
काली तारा सुन्दरी छिन्नमस्ता
मातङ्गी ह्रीः * षोड़शी सिन्धुपुत्री ।
इत्याद्या † याः सन्ति विद्याःकली ता
स्त्रिभि ‡ र्दत्ताः शीघ्रसिद्धा भवन्ति ॥ ७ ॥
अत एता महाविद्या यक्षिणीणां मनूं स्तथा ।
सिद्धार्थ्यादिषु चक्रेषु शोधयेन्नेति केचन ॥ ८ ॥
मन्त्राःपुमांसोऽनिल हुं फडन्ताः§ क्लीवा नमोऽन्ता वनिता द्विठान्ताः||
पुंसिस्त्रियः पुंमनवः स्त्रियां तु न शोधनीया इति केचनोचुः ॥ ९ ॥
सप्तार्णावधि बालकोऽथ दशलिप्यन्तं कुमारो युवा
स्यादाषोड़शवर्णमेव तरुणः स्याच्चिंशदर्णावधिः ।
आपञ्चाशदुदीर्य्यते मनुरथ प्रौढ़ स्ततश्चा शतं
वृद्धो वृद्धतरस्ततः शतचतुष्कान्तं सहस्रावधि ॥ १० ॥
सिद्धार्थ्यादौ बालमन्त्रा न शोध्या इत्थं क्वापि ग्रन्थ उक्तं श्रुतञ्च ।
तस्मादेतत् सर्वमाचार्य्यवर्य्यैर्यद्यद्युक्तं तद्विचार्य्यैव कार्य्यम् ॥ ११ ॥
यथासिद्धो भवेच्छिष्यो मन्त्रसिद्धिप्रसादतः ।
तथा तस्य हितं कार्य्यं गुरुणापि दयालुना ॥ १२ ॥

---

* ह्रीः—भुवनेश्वरी ।
† इत्याद्या इत्यत्राद्याशब्देन बगलामुख्यादयो गृह्यन्ते ।
‡ स्त्रीभिरिति ( क, ध, ) पुस्तके पाठः ।
§ यंहुं फट् अन्येषां । || द्विठान्ताः स्वाहान्ताः ।

शिष्येऽकृतार्थतां याति गुरुर्यात्यकृतार्थताम् ।
सिद्धोऽप्युद्धारणायास्य * स पुत्र † जायते यतः ॥ १३ ॥
राज्ञि राष्ट्रकृतं पापं पत्नीपापञ्च भर्त्तरि ।
तथा शिष्यकृतं ‡ पापं गुरुः प्राप्नोत्यसंशयम् ॥ १४ ॥
इत्यार्षवचनाच्छिष्यः पुत्रा दनवरोमतः § ।
नहि पुत्रकृतं पापं पिता तु लभते क्वचित् ॥ १५ ॥
अतो महर्षयः पूर्वे शिष्योद्धारणतत्पराः ।
तत्सिद्धिं साधयामासु र्नानोपायै रहर्निशम् ॥ १६ ॥
न शिष्य स्तरति क्वापि गुरुपादाश्रयादृते ।
लब्धज्ञानोऽपि नौकास्थोऽकर्णधारो जनो यथा ॥ १७ ॥
अतो गुरोरानुकूल्यं शिष्योऽपि गणयेत्तथा ।
गुरुचक्रेण विधिवत् शिष्यचक्रेण तस्य सः ॥ १८ ॥
न्यस्वादौ गुरुशिष्ययोः प्रतिकृतिं ‖ तस्यां न्यसेत् मातृका-
न्यासस्थानपथा खिलाक्षरगणं तन्नामपूर्वाक्षरात् ।
नेत्रास्यौष्ठकराग्रपादजठरोरः स्थानगश्चे द्गुरोः
शिष्य स्तस्य शुभं, गुरुर्यदि शिशोरन्यत्रगः स्याच्छुभः ॥ १८ ॥
इत्युक्तं गुरुशिष्यचक्रयुगलं कैश्चिन्मनुज्ञैः पुरा
सद्यः सिद्धिकरं निगूढ़ मिह तन्न्यस्तं प्रसङ्गान्मया ।
भूयः पीठविरोधमैत्रमथ गुरु र्यो वा निषिद्धोभवेद्
यः शिष्यश्च तथाभिधीयत इतः सन्देहबन्धच्छिदे ॥ २० ॥

---

* "पुत्रो" इति (ग) पुस्तके पाठः । † (न) पुनरिति (ग) पुस्तके पाठः ।
‡ शिष्यार्ज्जितमिति (ग) पुस्तके पाठः । § पुत्रादधिकोमतइत्यर्थः । ‖ पुत्तलिकां ।

शाक्तं पीठं दह्यते * वैष्णवेन क्षुद्रे † मन्त्रे ह्न्यते शम्भुपीठम् ।
सौरं पीठं शाम्भवे दह्यते द्राक् सौरे मन्त्रे गाणपत्यं च पीठम् ॥२१॥
दिग्वस्त्रा या ध्यानयोगेन देव्यः प्रोक्ता स्तत्तत्कल्पमध्ये मनुस्थाः ।
तन्मन्त्राणां जापतो विष्णुपीठं दग्धं भूत्वा शीघ्रसिद्धिं न दत्ते ॥ २२ ॥
देवी क्रुध्यति शाक्तिकाय सततं श्रीविष्णुमन्त्राश्रया-
त्तन्मध्ये नरसिंहमन्त्रपठनाद् दूरादपक्रामति ।
तस्मात्तन्मनुमाश्रयेन्न च कदाचित् शाक्तिकः स्वार्थवि-
त्तद्वद्वैष्णव एव शाक्तिक-मनुं सेवेत नेह क्वचित् ॥ २३ ॥
कुलं मूलाधारो भवति स यतः शक्तिसदनं
ततः शाक्तो मन्त्रो भजति पदवीं कौलिक इति ।
क्वचिद्विष्णो र्भक्तः स्मरति यदि वा कौलिकमनुं
पतत्यन्तेऽवीचाविह धनसुतस्त्रीविरहितः ॥ २४ ॥
एतद्दीपितमनुपीठवैरमुक्तं मित्रत्वं तदुपरि कथ्यते यथावत् ।
स्वं पीठं फलति यथा तथैव मित्रं ‡ सर्वार्थं मनुमनु जप्तु रेवदत्ते § ॥२५॥
शैवस्य मित्रं खलु विष्णुपीठं शैवं क्वचित् स्यादपि वैष्णवस्य ।
सर्वस्य मित्रं दिननाथपीठं न चेतरेषां क्वचिदस्ति मैत्री ॥ २६ ॥
शिष्यो न सेवेत गुरुं निषिद्धं शिष्यं निषिद्धं न गुरुः स्पृशेच्च ।
जपेन्न मन्त्रं दुरुपायलब्धं वदामि चैतद्धि पृथक्क्रमेण ॥ २७ ॥
न पितु र्नपितामहा न्न मातामहतः सोदरतो न वैरिपद्यात् ।
वयसाऽऽत्मसवर्णतश्च नीचा न्नच भिक्षो र्वनवासिनो न निन्द्यात् ॥२८॥

---

* विष्णुमन्त्रेण । † क्षुद्रैः पिशाच्यादिमनुभिः ।
‡ मित्रपीठं § मनुमद्दिश्य जपं कुर्वतः सर्वार्थं ददातीत्यर्थः ।

दीक्षां कुर्य्यात् दुर्ज्जना नो तथैव
व्यङ्गात् क्रूरा द्दादवैतण्डिकाश्च ।
लुब्धात् स्तब्धात् श्यावदन्तादपुत्राद्
यस्मात्याज्या दत्तमन्त्रा अपीमे ॥ २८ ॥

*शिष्य स्त्याज्यस्तद्वदन्धोऽलसश्च कामी स्वामिद्रोहकृत् मोहमत्तः ।*
विच्छिन्नात्मा भक्तिविश्वासहीनो यस्मादार्य्यानीदृशाः पातयन्ति ॥३०॥

एवं श्रीगुरुवक्त्रनिर्गतलिपीन्मन्त्रान् गृहीत्वा जपे-
न्नो मन्त्रा नच पुस्तकेषु लिखिता नान्योपदेशश्रुतान् ।
न व्याजेन गुरुं प्रतार्य्य च हठाल्लब्धान् कदाचिज्जपे-
त्तज्जापा नरके नरः कलुषितः कल्पत्रयं पच्यते ॥ ३१ ॥

इत्थं शिष्यशुभानुकूलविधिना निश्चित्य दीक्षादिनं
तत्प्राग् द्वादशमे दिनेऽथ नवमे किंवा पुनः सप्तमे ।
कुर्य्यान्मङ्गलसम्पदे विधिवदाचार्य्य स्तुतीयेऽह्नि वा
वस्त्रालंकृतिपुष्पचन्दनघन स्तत्राङ्कुरारोपणम् ॥ ३२ ॥

पात्राणि विविधानि तत्र विहिन्याद्यास्ततः पालिका
वैष्णव्योऽथ घटाश्च पञ्चवदना ब्राह्मयाः शरावाःपुनः ।
शैवा स्तत्र चतुश्चतुः क्रमतया संभूयते द्वादश
स्युस्तेषां परिमाणयोग्यघठनाकृत्यं यथावद् ब्रुवे ॥ ३३ ॥

सुखं पालिकानां सुवृत्तायतं स्यात् षड़ष्टाङ्गुलं चाधऊर्द्ध्वं यथावत् ।
समुत्सेधतो वेदसंख्याङ्गुलं तत्क्रमेणैव धुस्तूरपुष्पाग्रशोभि * ॥ ३४ ॥

* पलिकानांमुखमधः षड्ङ्गुलमूर्द्धं चाष्टाङ्गुलं । धुस्तूरपुष्प । यषोभि—प्रसारिताग्रनिम्नधः ।

ततो द्व्यङ्गुलः कण्ठ उत्सेधतः स्यात्तथायामतो विष्णुवाद्यङ्गुलश्च।
घटाकारमेवोदरं विस्तरोत्सेधतः स्याद्दिशाखाङ्गुलं निर्व्रणं च ॥३५॥
अधस्तात् पदं द्व्यङ्गुलोत्सेधमाया-
मतोऽष्टार्द्धसंख्याङ्गुलं स्यात् सुवृत्तम्।
जगुः केऽपि वेदाङ्गुलौ कण्ठपादौ
समुत्सेधतो गर्भमर्काङ्गुलं स्यात् * ॥ ३६ ॥
इयं निर्म्मिता पालिकानां स्वरूपैः समुत्सेधत स्तत्त्वसंख्याङ्गुलानाम्।
घटाना मथ द्व्यष्टसंख्याङ्गुलानां प्रमाणं सनिर्माणकल्पं च वच्मि ॥३७॥
वेदाङ्गुलायतियुतानि मुखानि तेषां
तावन्मितोच्छ्रययुतानि सुवर्त्तुलानि।
† तानोच्छ्रयायतिकगर्भपुटस्य तत्र
चत्वारि दिक्षु वदनानि तदूर्द्धमेकम् ॥ ३८ ॥
शरावाः स्युरर्द्धाङ्गुला स्तत्र तेषां पदानि स्यु रेकाङ्गुलोत्सेधभाञ्जि।
स्वविस्तारतो वेदसंख्याङ्गुलानि क्रमेणोदरं बाणयुग्माङ्गुलोच्चम् ॥ ३९ ॥
विशाखाङ्गुलं विस्तृतं तन्मुखं स्या
त्तदूर्द्धं मुखोत्राह एकाङ्गुलः स्यात्।
इमे पाकतः पाण्डुवर्णा विधेया
न कृष्णा न वक्रा न चा शुद्धमृज्जाः ॥ ४० ॥
पूर्व्वोक्तशाला मथ भूषयित्वा माल्यै र्विचित्रै र्वसनै र्वितानैः।
सपञ्चगव्याम्बुनिषेकशुद्धे लिखेद्गुरु र्मण्डल मेतदन्तः ॥ ४१ ॥

---

* अष्टार्द्धसंख्याङ्गुलं—चतुरङ्गुलं। अर्काङ्गुलं—द्वादशाङ्गुलं।
† वितस्तिमात्रायतस्यापदरस्य।

रेखाः पञ्च सुरेन्द्रवारुणगताः कृत्वा वितस्त्यन्तराः
शुक्लाः पञ्चकरायताः शशियमाशाग्रा स्तथैकादश ।
चत्वारिंशति * कोष्ठकेषु रचये द्वीथी र्बहिः पंक्तिभि-
र्मध्यद्व्यष्टपदे द्विपंक्तिनि चतुःकोष्ठत्रयं शेषयेत् ॥ ४२ ॥
आग्नेयादिपदानि तत्र रजसा रक्तेन कृष्णेन वै
पीतेनाथ सितेन तत् किमथवा शुक्लादिना रञ्जयेत् ।
वीथीः श्यामरजोभिरेव निविडं संपूर्य तत्पूर्वतः
पद्मं वारुणकुम्भरोपणकृते चित्रं पुनः कल्पयेत् ॥ ४३ ॥
पुण्याहवाचन मथो वरुणार्चनं च
संकल्पपूर्वमवसाय विधिं विधिज्ञः ।
जाते महोत्सवतया धुरि पञ्चघोषे †
पात्राणि तानि सलिलेन च शोधयित्वा ॥ ४४ ॥
आवेष्ट्य सूक्ष्मसिततन्तुभि रेक मेकं
मत्शालितण्डुलसुपूर्णपदेषु तेषु ।
गन्धप्रसूनकुशकूर्चसमास्तृतेषु
संस्थापये दुपरि पश्चिमतः क्रमेण ॥ ४५ ॥
ताः पालिका स्तदनु पञ्चमुखान् शरावान्
संस्पृश्य मूलमनुना क्रमत स्तदन्तः ।
मृद्वालुकोपलनिष्टष्टकरीषचूर्णैः
संपूर्य कण्ठवलयान्त मथाम्बु सिञ्चेत् ॥ ४६ ॥

---

* चत्वारिंशत्संख्यकेषु । † ततं शुषिरमानद्धं घनमित्थं चतुर्विधं । स्तौण-मूर्छिका शब्दः पञ्चमो घोषईरितः ।

श्यामाकशालिशितसर्षपमाससुद्ग-
निष्पाव * कङ्कुककुलत्थशितातकीनाम्।
वीजानि गव्यपयसा सुधिया विशोध्य
पात्रेण केनचिदमूनि करे गृहीत्वा ॥ ४७ ॥
विप्राशिषा मधुरशाकुनसूक्तपाठैः
शङ्खादिमङ्गलरवै श्च गुरुः सशिष्यः।
मूलं मुदा मनु सुपांशु पठन् क्रमेण
पात्रेषु तेषु निवपे दनु पालिकादौ ॥ ४८ ॥
श्रभुरक्षितानि रजनोरमनीरपुरे
राच्छाद्य शुद्धवसनै रथ तानि रक्षेत्।
नान्यो यथा स्पृशति पश्यति लंघते वा
क्लीवाश्च पक्षिपशवो न यथा क्रमंते ॥ ४९ ॥
नित्यं ततः प्रतिदिनं निशि च प्रभाते
रात्रीश्वरामरवराय दिगीश्वरेभ्यः।
दद्याद्बलिं त्रिविधपात्रचतुष्कदिक्षु
तारादिङेयुत-नमोऽन्वितनाममन्त्रैः ॥ ५० ॥
भूतेभ्य आज्यतिललाजकरम्भशुद्ध-
हारिद्रचूर्णकलितं वलि माद्यरात्रे।
स्नानं सतण्डुलतिलं च वलिं पितृभ्यो
दद्याद्धि तीयरजनीवदनप्रवेशे ॥ ५१ ॥

---

* निष्पावःशुकशिम्बी।

मत्स्यारिकेलरमनाजकरम्भमिश्रं यक्षेभ्य एव खलु रात्रिमुखे तृतीये ।
नागेभ्य इक्षुरससंयुतसक्थुपिष्टं तूर्य्येऽथ पञ्चमनिशावदने विधात्रे ॥५२॥
पद्माचृतं तदनु षष्ठतमे शिवाय
सापूप मन्न मथ सप्तमरात्रिवक्त्रे ।
श्रीविष्णवे घृतगुड़ान्नं मिमेहि सप्त-
रात्रीश्वराः प्रतिनिशास्यमुषस्सु पूज्याः ॥ ५३ ॥
इयोर्नवद्वादशघस्रपञ्चयो र्भवंति चाह्रान्यधिकानि पञ्च वै ।
वलिं हरेत्तेषु तथैव विष्णवे पयःशिताज्योदनयावमोदकैः ॥ ५४ ॥
त्रिरात्रपक्षे वलिमाहरेत पञ्चान्तमुक्तेन पथा यथावत् ।
किंवा विधातारमुमाधिनाथं रमाधिनाथं च यजेत तत्र ॥ ५५ ॥
प्रासादपूर्त्तवनिकाप्रतिमाप्रतिष्ठा-
दीक्षाभिषेकनवदुर्गगृहप्रवेशे ।
अन्येषु चोत्सवदिनेष्वखिलार्थसिद्धैर-
कार्य्योऽङ्कुरार्पणविधिर्वहुमङ्गलोऽयम् ॥ ५६ ॥
इत्यङ्कुरारोपणकर्म्म कृत्वा सन्तोष्य विप्रान् विविधोपहारैः ।
कृताशिष स्राथ शिशोर्यथावत् कुर्वीत विद्वान् कलशाधिवासम् ॥५७॥
दीक्षापूर्वदिने विधाय विधिना प्राभातनित्यक्रियां
स्नातं शुद्धनिचोल मुज्ज्वलतनुं शिष्यं गृहीत्वा गुरुः ।
दीक्षामण्डपसन्निधौ बुधवरैः सार्द्धं प्रविश्य स्वयं
सद्यः साध्यसमस्तवस्तुनिचयं * निश्चित्य संग्राहयेत् ॥ ५८ ॥

---

* तत्कालसंपाद्यं गव्यादिकं वस्तुजातं ।

पिङ्गारक्तहरित्सिताशितगवां सर्पिश्च मूत्रं दधि
क्षीरं गोमयमब्ध मत्र कुडवं प्रस्थानि चत्वारि च।
तेजस्तत्सवितुर्दधीत्यथ पयो गन्धेति संसाधयेन्-
मन्त्रै स्तान्यथवा पिशङ्गसुरभे र्गव्यानि तुल्यानि च ॥ ५८ ॥
क्षीरक्षौद्रसिताद्धीनि सघृतान्येतानि पञ्चामृतं
तुल्यं प्रस्थमितं तथैव विविधं नैवेद्ययोग्यं हविः।
दूर्व्वाचन्दनगन्धमाल्यकुसुमाद्यन्यानि संगृह्य त-
द्दोषैः पञ्चभिरारभेत विधिवत् शिल्याधिवासोत्सवं ॥ ६० ॥
पुष्पस्रङ्नवमङ्गलच्छदकुलैः सच्चामरोल्लोचकै-
र्वस्त्रैः पुञ्जितनारिकेलकदलीपूगादिसद्यःफलैः।
रक्तश्यामसिताभतन्तुग्रतया दर्भस्रजा वेष्टितं
वस्त्राकल्पविचित्रतोरणयुतं तं मण्डपं मण्डयेत् ॥ ६१ ॥
प्रागाद्यष्टहरित्सु पीतरुधिरश्यामाशितश्वेतधू-
म्राच्छश्वेतनिभा वितस्ति विततः * सार्द्धकहस्तायताः † ।
तत्तद्दिक्पतिहेतिलाञ्छनवती ‡ बद्धा पताका दृढा
मध्ये किङ्किणिजालयुक्तशबलव्यामध्वजं § स्थापयेत् ॥ ६२ ॥
चतुर्णां द्वाराणां प्रघणमभितः पूर्ण्णकलशौ
न्यसेद्वौ द्वौ सद्यः कुसुमफलपत्राचितयतौ।
तथा दीपौ द्वौ द्वौ सुरभिघृतपूर्णौ च सदृशौ
तदग्रेषूदग्रान् सफलदलरम्भाविटपिनः ॥ ६३ ॥

---

* द्वादशाङ्गुलायामाः।    † सार्द्धहस्तनम्राः।

‡ तत्तद्दिक्पालायुधचिह्निताः।    § चित्रवर्णं व्याममात्रायतध्वजमित्यर्थः।

द्वारशाखोभयोः पार्श्वयोश्चित्रवित्शिल्पिनां कल्पिते वर्णकैः कल्पयेत् ।
मन्त्रकल्पोदितान् द्वारपालान् यथाकल्पवर्णां पुनर्ज्जाह्नवीं चार्कजाम् ॥ ६४
सदोमण्डपस्नानवेश्मादिकं यत् परिष्कृत्य तत्सर्व्वं मुक्तानुरूपम् * ।
ततः पञ्चगव्याम्बुगन्धानुलिप्ते लिखेन्मण्डलं स्थण्डिले मण्डपान्तः ॥ ६५ ॥
हरेः प्रियं स्वस्तिकमण्डलं तत् प्रियं पुरारेः शिवनाभनाम ।
तथाम्बिकाया नवनाभसंज्ञं पञ्चाब्जसंज्ञं द्विरदाननस्य ॥ ६६ ॥
प्रियं दिनेशस्य च वारुणाख्यं ग्रहार्च्चनादौ ग्रहमण्डलं च ।
तान्यत्र तत्कल्पवचोभि † रुक्तं कुर्व्वीत चित्राकृति चित्तहारि ॥ ६७ ॥
यस्य साधारणं ‡ मण्डलं यन्मतं तल्लिखेत्तत्र वा वक्ष्यमाणक्रमात् ।
किं नु वा सर्व्वतोभद्रदं शोभनं सर्व्वसाधारणं सर्व्वतोभद्रकम् ॥ ६८ ॥
विना मण्डलं कुम्भपूजा न कार्य्या
विना कुम्भतोयाभिषेकं कदाचित् ।
न शुद्धिः शिशोः स्यादशुद्धस्य जन्तोः
क्व वा मन्त्रदीक्षा कथं मन्त्रसिद्धिः ॥ ६९ ॥
ततोमण्डलं संविभज्यैव कुर्य्यात्तथा सूत्रपातात् समैस्तत्र कोष्ठैः § ।
रजः पञ्चभिः पूरयेदुक्तरूपैर्यथा भूः पिधेया समस्ति स्वरूपा ॥ ७० ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्व्वस्वे दीक्षाङ्गसमुद्देशो नाम षष्ठः संग्रहः ॥ ० ० ० ॥

---

* स्वकल्पोक्तं । † तत्तन्त्रवाक्यैः । ‡ नियतं ।

§ अतुल्यकोष्ठसमं विकीर्णं दुष्टभूमिकं । मण्डलं वर्जयेन्मन्त्री तदनिष्टफलप्रद-मिति दोषपरिहाराय मण्डलविधेरितिकर्त्तव्यतामाह ।

## सप्तमः संग्रहः ।

अथ मण्डपलक्षणानि वक्ष्ये गुरुवाचा त्रिविधागमान् विविच्य ।
प्रथमं कथयामि सुप्रशस्तं शुभसौम्याकृति सर्व्वभद्रकम् ॥ १ ॥
ततो मण्डपे गव्यगन्धानुलिप्ते लिखेन्मण्डलं सम्यगष्टच्छदाब्जम् ।
सवृत्तत्रयं राशिपीठांघ्रिवीथीचतुर्द्वारशोभोपशोभास्त्रयुक्तम् ॥ २ ॥

कृत्वा पुरोक्तविधिना दशसप्तरेखाः
प्राक्प्रत्यगिन्दुयमदिग्गतसूत्रपातैः ।
वेदाङ्गुलान्तरगतैर्विभजन् कलाभिः
षड्गुणाष्टमितपदानि लभेत तत्र ॥ ३ ॥

तद्वाह्यपंक्तियुगसंस्थितपञ्चचन्द्र-
शुभ्रांशुसम्मितपदै रचयेद्यथावत् ।
द्वारादिबाह्यचतुरङ्गमथो तदन्तः
पंक्तिद्वयेन तदशीतिपदेन वीथीम् ॥ ४ ॥

द्वाभ्यां गजाम्बुधिपदै रथ राशिचक्रं
मध्यस्थितेन पदषोड़शकेन पद्मम् ।
एवं प्रमाय मनसा ऽथ यथास्वरूपं
तत्तद्रजोभि रनुरञ्जयता त्तदङ्गम् ॥ ५ ॥

तन्मध्यसंस्थपदषोड़शकं प्रमार्ज्य
मध्यस्थविन्दुमभि कर्कटसूत्रगत्या ।
वेदाङ्गुलप्रमित मारचये च्च वृत्तं
सा कर्णिका भवति पीतरजोऽभिपूर्णा ॥ ६ ॥

नेत्राङ्गुलं तदभितः पुनरेव वृत्तं पीतारुणार्ज्जुनशिखा इह केशराः स्युः।
एकाङ्गुलेन परितो बहिरेव तेषां वृत्तेन रक्तरजसा दलमूलसन्धिः ॥७॥

स्युः स्वाङ्गुलावधि सरोजदलोदराणि
शुक्लानि तेषु शिखराणि भुजाङ्गुलानि।
रक्तानि चारुहरिणीपदसन्निभानि
कार्य्या श्च रक्तरजसा दलसीमरेखाः ॥ ८ ॥

तेषां वहि श्च नयनाङ्गुल मन्तरालं
श्यामं विचित्रवलयाकृति पीतविन्दु।
तावद्बहि स्त्रिगुणवर्णमयं त्रिवृत्तं
श्यामा स्तथा दलशिखागतसन्धयः स्युः ॥ ९ ॥

पत्राणि चेदरुणभानि शितत्विषः स्यु
स्तत्सन्धयोऽरुणशिताशितवृत्तभाजः।
वृत्तत्रया द्बहि रक्तण-रजोभिपूर्णा
स्यात् षोड़शाङ्गुलमिता चतुरस्ररेखा ॥ १० ॥

तद्बाह्यपंक्तियुगदिक्षु चतुश्चतुष्कशृङ्गाटकान्तनिहितेन च कर्कटेन।
कुर्व्वीत मण्डल-चतुष्टयमुक्तरूपं सप्ताङ्गुलं क्रियकुलीरतुलामृगाणां ॥११

तत्पार्श्वयो रपि तथाविधमण्डले द्वे
ऋत्वङ्गुले प्रतिविधाय तथैव * मष्टौ।
संभूय तानि रविसंमितमण्डलानि
मेषादिराशिनिलयान्यनु-सव्यतःस्युः ॥ १२ ॥

---

* एवमष्टौमण्डलानिकृत्वा तानि पूर्व्वोक्तमण्डलचतुष्टयेनमिलयित्वा सव्य-क्रमेण द्वादशमण्डलानि मेषादिराशीनां मण्डलानि कुर्य्यादित्यर्थः।

अथवा चतुरस्ररूपपंक्तिद्वितयेन क्रियतां हि राशिचक्रम् ।
उदयाद्यनु यत्र हि त्रिकोणाकृतयो द्वादश राशयो भवति ॥ १३ ॥
जलजान्तयुगास्रवीथिमध्येऽनुदिशः सूत्रचतुष्टयं निपात्य ।
सुरनाथयमाम्बुनाथयक्षाधिपदिग्गामितया तथानुकोणम् * ॥ १४ ॥
चरराशिपदानि दिक्षु कुर्य्याद्बहिरग्राण्यभितोऽन्तराग्रभाञ्जि ।
स्थिरराश्युभयात्मनां पदानि द्विषड़ेवं खलु राशयस्त्रिकोणाः † ॥१५॥
चतुरस्रमिदं हि राशिचक्रं विहितं तद्यदि वर्त्तुलं विदध्याद् ।
जलजात्मकृतत्रिवृत्तबाह्ये चतुरस्रं चतुरोत्तमो विलुम्पेत् ॥ १६ ॥
वृत्तत्रयादुपरि पंक्तियुगावगाहि
वृत्तं विधाय दशकाङ्गुलसंस्थितं तत् ।
एकाङ्गुलेन किमथो नयनाङ्गुलेन
वृत्तेन नेमिमशितां रचयेत्तदन्तः ॥ १७ ॥
तन्मध्ये पृथुमातुलङ्गसदृशान्यब्जच्छदाभानि वा
राशि-द्वादशमण्डलानि रचयेत् पञ्चाङ्गुलानि क्रमात् ।
त्रीणि त्रीणि दिशासु तानि निहिता-न्येवाङ्गुलार्द्धै रवैः
कृष्णैःपीनपिपीलिकाकृतिवरै र्व्यक्तं विभक्तानि च ॥ १८ ॥

* पद्मपानचतुरस्रवीथ्यायाश्चानयोर्मध्यपंक्तिद्वये प्रतिदिशं पूर्व्वदक्षिणपश्चिमोत्तरगामित्वेन सूत्रचतुष्टयंनिपात्य तथाऽनुकोण अग्निवायोरीशाननैर्ऋतयोश्च सूत्रचतुष्टयं निपात्य इत्यर्थः ।

† तत्र सूत्रादिकमध्ये चतुर्द्दिक्षु बहिःशिखराणि चरराशीनां मेषकर्कटतुलामकराणां पदानिकुर्य्यात् अभितस्तेषां पार्श्वद्वये अन्तःशिखराणि स्थिरराशीनां वृषसिंहवृश्चिककुम्भानां, उभयात्मनां द्व्यात्मकानां मिथुनकन्याधनुर्मीनानां च पदानिकुर्य्यादित्यर्थः ।

पूर्वादिक्रमतोऽनुसव्यगणनान्मेषादिकान् कल्पयेत्
रक्तांस्तत्र चरां स्थिरांश्च विषदान् पीतप्रभान् द्व्यात्मकान् ।
तद्वाह्ये चतुरस्त्र मेक मथ तत् कोणेषु रक्तानि च
व्यक्तं पीठपदानि तानि रजसा कृष्णेन वा पूरयेत् ॥ १८ ॥

एतद्भूराशिचक्रं मनुषु समुचितं मानुषं मेषपूर्वं
सिंहाद्यं पित्र्य मेतद्व्रतविधिषु भुवो राशिचक्रं प्रशस्तम् ।
दैवं स्वाराशिचक्रं मत मखिलसुरस्थापने कार्म्मुकाद्यं
चक्रं ज्ञात्वा त्रिनाभि त्रिविधमिति बुधश्चिन्तयेत्तत्र तत्र ॥ २० ॥

दिक्षु द्विपंक्तिगतवीथिपदावगाहि
कृत्वा मनोज्ञतरकल्पलताचतुष्कम् ।
कोणद्वयान्तरविलम्बि-विनम्रशाखं
सर्व्वर्त्तुपुष्पफलपत्रिदलै र्विचित्रम् ॥ २१ ॥

वीथ्यः शिता स्तदुपरिस्थितकल्पवल्ल्यः
पीता स्छदाश्च हरितो विहगा विचित्राः ।
नानाप्रभाणि कुसुमानि फलानि तासां
द्रष्टु र्मनोनयनहारि सुरूपभाजाम् ॥ २२ ॥

तद्वाह्ये पंक्तियुग्मे दिशि दिशि चतुरो द्वारदेशान् शिताभा
नन्तः पंक्तिस्थकोष्ठद्वयसहितबहिःपंक्तिकोष्ठैश्चतुर्भिः ।
तेषां पार्श्वद्वयेऽन्तस्त्रिपदयुतबहिःकोष्ठकैना ऽथ शोभे
रक्ते कुर्वीत पीते तदुभयविपरीतात्मिके चोपशोभे * ॥ २३ ॥

---

* बहिस्त्रिभिरन्तरेकेन इतिचतुर्भिरुपशोभेकुर्वीतइत्याशयः ।

कोणेष्वस्त्राणि चत्वार्य्यविषदरजसा रञ्जयेत् कोष्ठषट्कै:
सर्वाङ्गान्येवमस्य स्फुटमथ रचयेच्छुक्लरेखाभि रन्त: ।
बाह्ये विस्तस्य रेखा स्त्रिगुणरुचिवहास्तत्र कोणेषु भूय:
कीराकारच्छदान्त: सरसिजमुकुलान्येव चित्रोत्तराणि ॥ २४ ॥
पश्चाद्वारारोहणं चारुचित्रं पार्श्वद्वन्द्वे तत्र षट्कोण-युग्मम् ।
प्राच्यां चक्रं हेमकुम्भोपरिष्टाच्चित्रं कुर्य्या च्चारुचञ्चत्पताकम् ॥ २५ ॥
विद्याङ्गुलं मण्डलमेतदुक्तं कोष्ठानि चास्मिंश्चतुरङ्गुलानि ।
एकाङ्गुलास्तत्र च सीमरेखा: पार्श्वद्वयं व्याप्य यथाकृतिस्था: ॥ २६ ॥
एतन्मण्डल मुत्तमं निगदितं कार्य्यं महामण्डपे
दीक्षादौ हितवर्द्धमान मितरत्प्रोक्तं ततो मध्यमम् ।
तस्यार्द्धं तु ततोऽधमं तदुदितं संकीर्णशालादिषु
स्यादेतत्त्रितयं स्वनामसदृशं स्यात् सर्वतोभद्रकम् ॥ २७ ॥
केचित् प्राहु: सर्वतो भद्रमन्यत् कोष्ठान्यादौ पूर्ववत् संविभज्य ।
मध्ये षट्त्रिंशत्पदैरुक्तरूपं पद्मं कुर्य्यादष्टपत्रं विवृत्तम् ॥ २८ ॥
पीठं पुनस्तदनु तद्बहिरेकपंक्त्या
गात्राणि तस्य विषदानि पदैश्चतुर्भि: ।
कोणेषु पीठचरणानरुणां स्त्रिकोष्ठै-
र्वीथ्यादिकं तु विधिवद्रचयेत् पुरोवत् ॥
साधारणं भवति मण्डल मेतदेवं
भूयस्ततो लघुतरं परमेक मस्ति ।
तत्र त्रयोदशभि रोतपरोतसूत्रै:
कोष्ठानि वेदनिगमैमिन्दुतानि कृत्वा ॥ २९ ॥

षट्त्रिंशता तदुदरस्थपदैः पुरोवत्
पद्मं विधाय परितश्च तथैव पीठम् ।
पंक्तिद्वयेन च बहिर्दहनास्त्रशोभा-
द्वाराणि तत्र रचयेत् कथितानुरूपम् ॥ ३० ॥
तस्मिन् वीथिर्नोपशोभा विधेया लघ्वाख्यं वै सर्वतोभद्रमेतत् ।
त्रेधा कार्य्येषूत्तमं मध्यमं च न्यूनं चेति तन्विधेवं विदध्यात् ॥ ३१ ॥
वक्ष्येऽथ स्वस्तिकादीनां मण्डलानां च रक्षणम् ।
वैष्णव्याद्यासु दीक्षासु यद् यत्प्रोक्तं विशेषतः ॥ ३२ ॥
नवसूत्रनिपातनात्पुरोवद्गुरुरष्टाष्टककोष्ठकानि कृत्वा ।
इह मध्यचतुष्पदैः सरोजं रचयेदुक्तनिरूपणं रजोभिः ॥ ३३ ॥
सीमान्तान्ता वीथिचतस्रोऽम्बुजदिक्षु
प्राक्पश्चाद्द्वेऽपि तत्रोत्तरयाम्ये ।
शिष्टं दिक्ष्वष्टासु चतुष्काष्टकमत्र
प्राप्यैकैकं षोडशकोष्ठं विभजेत ॥ ३४ ॥
ईशानाद्यैः कोष्ठचतुष्कैर्बहिरन्तः
पंक्तिव्याप्तौ दिक्षु चतस्रः खलुशोभाः ।
कुर्य्याच्छुक्लश्यामलपीतारुणभासः
कुर्य्यादष्टौ स्वस्तिकरेखा भृजुवक्राः ॥ ३४ ॥
लक्ष्यं कृत्वा विन्दुमथो मण्डलमध्ये
प्राग्याम्य-प्राग्दक्षिण-पश्चादनुयाम्या ।
तद्वत्पश्चादुत्तरपश्चादथसौम्या-
प्राक्सौम्या चेत् स्वस्तिक मेवं विधिना स्यात् ॥ ३५ ॥

अन्यत् सर्वं पूर्ववदस्मिन् विदधीत-
स्यादेवं तत्स्वस्तिकनामार्चनविम्बम्।
संपूज्यास्मिन् विष्णु मशेषप्रभविष्णुं
भूया मर्त्यो भूतिभि रस्मिन्नतिजिष्णुः ॥ ३६ ॥
क्वचित् कुर्वन्त्यत्र सरोजान्यपि दिक्षु
व्यक्तं मध्याम्भोजवदुक्तद्युतिभाञ्जि।
कोणेष्वेव स्वस्तिक मेकैकश एवं
कृत्वा वा स्मिन् कुम्भसपर्य्यां विदधीत ॥ ३७ ॥
शिवनाभमण्डलविधान मथो प्रवदामि येन शिवदः स शिवः।
परितोषमेति परितः कुशलं वितनोति यत्र लिखितं निलये ॥ ३८ ॥
प्रागुत्तरायततया विरचय्य रेखाद्वाविंशतिं कुयुगवेदपदानि लब्ध्वा।
कोणेषु तत्र पदपञ्चकपञ्चकेन दुर्गाख्यमण्डलचतुष्टयमेव कुर्य्यात् ॥३९
कोणानुकोणगतपञ्चपदे स्तदन्तः
स्यात् शृङ्खलाद्वय मशुभ्ररजोऽभिपूर्णम्।
दिक्षुस्थितै स्तदवशिष्टचतुश्चतुर्भिः
कोष्ठैः सितं रुचिरलिङ्गचतुष्टयं स्यात् ॥ ४० ॥
तद्दौर्गमण्डलचतुष्टयमध्यभागे
लिङ्गद्वयं दिशि दिशि क्रमतो विदध्यात् ॥
प्राच्यां सितं शमनदिश्यसितं प्रतीच्यां
रक्तञ्च पीतमितरत्र तदेव वच्ये ॥ ४१ ॥
अन्तःशीर्षं तत्तु लिङ्गाष्टकं स्या दङ्गैःषड्भिःपङ्क्तिषट्कावगाहि।
दैर्घ्यं तद्वत्पञ्चकोष्ठावधि स्यात्तत्राङ्गानां लक्षणं दर्शयामि ॥ ४२ ॥

कोष्ठैः पञ्चभिरङ्घ्रि रेतदुपरि स्याज्जंघिका च त्रिभिः
कोष्ठकेन कटि स्त्रिभिश्च तदुरो बाहुद्वयं पञ्चभिः।
एकेनैव शिर स्ततोऽङ्घ्रिभुजयो र्मध्ये चतुर्भिः पदै-
स्तिर्य्यग्लिङ्गयुगं कटेरुभयतस्तज्ज्ञैश्चवर्णं पुनः॥ ४३॥
स्तम्भः पञ्चपदैर्भवेदनुदिशं लिङ्गद्वयोर्मध्यतः
कृष्णश्वेतसपीतशोणितरुचिः प्रागादितश्च क्रमात्।
स्तम्भाग्रे दशभिः पदैर्विरचयेद्वीथीर्द्विपङ्क्त्यान्तरा *
श्यामाः पीतलतारुणच्छदधरा वर्णै र्विचित्रान्तराः॥ ४४॥
केचित्स्तम्भशिरःस्थितं पदयुगं संकल्प्य शुक्लं त्रपं
स्थानं तत्परित श्चतुष्कयुगले कुर्वन्ति पद्मं सितम्।
कोष्ठकेन च लिङ्गमूर्द्धसु हरिद्राचूर्णकैश्चम्पकं
कोणेषु स्फुटपङ्कजानि रचयेत्तद्वच्चतुर्भिः पदैः॥ ४५॥
किं वा तत्र पदै स्त्रयोदशमितै र्लिङ्गद्वयान्तःस्थितै
र्मध्ये पञ्चभिरेककुम्भ मभित श्चत्वारि लिङ्गानि च।
कुर्य्याच्चित्रतरं त्रिभिस्त्रिभि रथो लिङ्गान्त्य-पार्श्वद्वये †
दुर्गामण्डललग्नपाद मपरं लिङ्गद्वयं तादृशम्॥ ४६॥
मध्येऽवशिष्टपदसप्तकसप्तकेन ‡
पद्मं त्रिवृत्तवलयं चतुरस्रशोभि।
कुर्य्यात् पुरोवदखिलं खलु मण्डलाङ्गं §
प्रोक्तं महाद्भुतमिदं शिवनाभनाम॥ ४७॥

* पंक्तिद्वयव्यापिनीः।

† लिङ्गानां बहिःपार्श्वद्वये।

‡ एकोनपञ्चाशत्पदैरित्यर्थः।

§ कोणशोभादिकं।

अथवा ऽन्यविधानतो ब्रुवे शिवनाभं बहुलाभदायकम्।
दशसप्तपदानि पूर्ववद्विलिखेत् प्रागुदगायतं समन्तात्॥ ४८॥
पूर्वस्यां दिशि पूर्ववद्विरचयेल्लिङ्गत्रयं पंक्तिशो
मध्येशोभयत स्त्रयोदशपदैः स्तम्भं च कुम्भ न्तु वा *।
कृत्वा तद्वदथो तथैव रचयेल्लिङ्गत्रयं पश्चिमे
याम्ये चोत्तर एकमेक मुभयोः पार्श्वेऽपि लिङ्गद्वयम्॥ ४९॥
लिङ्गानां मुखमभितो भुजोपरिष्टात्
कुर्वीतामरलजटाः पदैश्चतुर्भिः।
कोणस्थैः शिवमभितः † पदैश्चतुर्भिः
शुभ्रं तद्वृषभगृहस्थलं विदध्यात्॥ ५०॥
वर्णास्तु पूर्वं गदितः शिवानां श्यामः पुरःपश्चिममध्यभाजोः।
मध्ये पदैः पञ्चकपञ्चकेन पद्मं पुरोवत् सकलं विदध्यात्॥ ५१॥
शिवनाभमिदं द्विविधं गदितं
विविधागम मत्र विविच्य मया।
नवनाभमथो विषदीक्रियते
नगराजसुतापरितोषकरम्॥ ५२॥
उक्तस्वस्तिकमण्डलाद् यदि वहिः कोष्ठैकमात्रायता
वीथ्यो दिक्षु चतस्त्रएव रुचिराः श्यामा भवेयुः पुनः।
मध्याम्भोज-बहिर्दिशासुच तथा चत्वारि पद्मानि चेत्
एतत् स्यान्नवनाभमण्डलमिति ख्यातं क्षितौ क्षेमदम्॥ ५३॥

---

* मध्यलिङ्गस्यपार्श्वद्वये त्रयोदशकोष्ठैः स्तम्भं कुम्भंवाकुर्य्यादित्यर्थः।
† लिङ्गपार्श्वद्वये।

१०

इदमपि यदि कोणस्वस्तिकैः स्याद्विहीनं
तदिह पदचतुष्कं स्याच्चतुर्वर्णयुक्तम् ।
गणपतिपरितोषाधायि पद्माब्जसंज्ञं
भवति निखिलनृणां मण्डलं मङ्गलाय ॥ ५४ ॥
पद्माब्जमण्डलं प्रोक्त मथ वारुणमण्डलम् ।
वच्मे पूर्त्तप्रतिष्ठादौ शस्तं सूर्य्यार्चनेऽपि च ॥ ५५ ॥
मध्यस्थविन्दुमभितोऽङ्गुलयुग्मकेन
सार्द्धाङ्गुलेन किमु * कर्कटसूत्रगत्या † ।
वृत्ताष्टकं भुवि विधाय तथाष्टसूत्रं
कोणानुकोण मथ दिक्प्रदिशं विदध्यात् ॥ ५६ ॥
मध्ये वृत्ते कर्णिकाः पीतवर्णाः किंजल्काः स्युःपीतशुक्ला द्वितीये ।
पत्राग्राणां तत्र पत्रोदराणां रेखां कुर्य्यात्तत्तुरीये तृतीये ॥ ५७ ॥
एवं पद्मं पूर्ववत् कल्पयित्वा
कृत्वा पीतां वीथि मेकेन बाह्ये ।
शुक्लं कृत्वा तद्वहिर्वृत्त मेकं
नानावर्णां तत्र वल्लीं विदध्यात् ॥ ५८ ॥
तद्वाह्यपंक्तिद्वयमध्यवर्त्तिसूत्राष्टकाग्रान्तगतानि यानि ।
षोढ़ा विभज्य प्रतिखण्ड मेतान्यवाप्य तत्षस्वतिः पदानि ॥ ५९ ॥

---

* उकारोविकल्पार्थः, तेन किम इत्यस्य किम्वेत्यर्थः ।

मध्येविन्दुं दत्वातस्य वहिः अङ्गुलद्वयमानेन सार्द्धाङ्गुलमानेन वा इति पत्रद्वय लाभः ।

† सूत्राग्रेण कर्कटवर्त्तीय्यंभ्रमणं कर्कटसूत्रं ।

दिक्षु द्वारचतुष्टयं रसपदैस्तेष्वाचरेत् पाण्डरं
निर्म्माज्र्यान्तरपंक्तितः पदयुगं तद्वाह्यपंक्तेस्त्रतुः (१)।
द्वाराणामपि पार्श्वयोररुणभाः शोभाश्च तावत् पदै
स्त्वार्य्यन्तरयो बहिः पदयुगं निर्म्माज्र्य निर्म्माय च ॥ ६० ॥
कोणाष्टकं द्वारचतुष्टयं च क्लृत्वैव मेषा मवशिष्टकोष्ठैः।
कोणेषु च द्वारवदेव पीताः कुर्य्याच्चतस्रो रुचिरोपशोभाः॥ ६१ ॥
बाह्ये त्रिवृत्तं त्रिगुणं स्वरूपं द्वाराग्रतः पीठचतुष्टयं च ॥
कोणेषु तच्चक्रचतुष्टयं स्यादेतद्वपु र्वारुणमण्डलस्य ॥ ६२ ॥
अथ वारुणचक्र मुच्यते भुवि सारस्वततन्त्रसम्मतम्।
क्षितिविम्बमिदं यदाकृतिप्रतिविम्बोपम मत्र दृश्यते ॥ ॥ ६३ ॥
वृत्ताष्टकं भुवि विधाय पुरोक्तरीत्या दिक्कोणगं तदनु सूत्रचतुष्टयं च।
तत्सूत्रपार्श्वमभितोऽङ्गुलमेकमेकं त्यक्त्वा पुनर्न्यसतु सूत्रयुगं समन्तात्॥६
तन्मध्यसूत्र मभिमृज्य च ते रराणां
दण्डाष्टकं परिकलय्य दिगष्टशोभि।
मध्येऽथ नाभि मशितां बहिरेव तस्या
वृत्तेन तुन्दवलयं विरचय्य पीतम् ॥ ६५ ॥
तुन्दाद्बहिश्च परिधिं परिकल्प्य रक्तं
वृत्तत्रयं तु बहि रस्य विहाय मध्ये।
शेषेण वृत्तयुगलेन बहिः सुवृत्तां
नेमिं करोतु निचितां रजनीरजोभिः ॥ ६६ ॥

(१) चतुः पदानिनिर्मार्ज्य द्वाराणिकुर्य्यादित्यर्थः।

मध्यस्थवृत्तत्रितयेऽन्तरालं यत्स्यादराणा मभित स्त्रिवृत्तम् ।
निपातिते सूत्रयुगेऽत्र तद्वत् प्रत्येकतस्तन्नवकोष्ठवत्स्यात् * ॥ ६७ ॥
ऊर्द्ध्वं त्रिकोष्ठं तदधस्त्रिकोष्ठंमध्यस्थमेकं परिमृज्य सप्त ।
ततोऽवशिष्टैः परितोऽरदण्डानराणितत्कोष्ठयुगैर्विदध्यात् ॥ ६८ ॥
तत् सप्तकोष्ठात्मकमन्तरालं कृष्णं विदध्यादरयुग्ममध्ये ।
अराणि तत्पञ्चपदात्मकानि रक्तानि कुर्य्यादरुणैरजोभिः ॥ ६८ ॥
तुन्दस्य नेम्या अपि बाह्यवृत्तं कृष्णं विदध्यादपरं च शुक्लम् ।
कुर्य्यादराणां बहिरग्रदेशेष्वस्त्राणि चाष्टावरणानि धीरः ॥ ७० ॥
एतन्मतं वारुणचक्रविम्वं सौदर्शनं केचिदुशन्ति सन्तः ।
यद्दर्शनाद्दुष्कृतदुष्टसत्वा अदर्शनं यान्ति शुभानि सन्ति ॥ ७१ ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्वस्वे मण्डलविभागो नाम सप्तमः संग्रहः ॥ ० ॥

## अष्टमः संग्रहः ।

इत्थं मण्डल मारचय्य विधिवन्निर्म्मि क्त † वक्त्राङ्घ्रिटो
नीसाचः स कृताचमः शुचिमना गत्वा सदो-मण्डपम् ।
अष्टौ देश-कुलोद्भवान् सुमनसो होतॄन् द्विजान् श्रोत्रिया-
नर्च्चित्वा वरये चतस्रषु तथा द्वार्षु क्रमाज् जापकान् ॥ १ ॥

---

* "नवकोष्ठकंस्यात्" इति ( ग, घ, ) पुस्तकयोः पाठः ।

† धौतानन पादपाणिनासानेत्रः

तेषामाशीर्व्वचोभिर्बहुविधमधुरातोद्यनादैः * समृद्धः
कुर्य्यात्कुम्भाधिवासं विधिवदधिकृतस्वेष्टदेवेष्टिपूर्व्वम् ।
एतत् पूजाविधानं विविधमुनिमतं वीक्ष्य वक्ष्यामि पश्चात् †
संक्षेपादत्र वक्ष्ये किमपि मृदुधियां बुद्धये सूत्रवृत्त्या ॥ २ ॥
द्वाराग्रेष्वथ मङ्गलाङ्कुरलसत्-पात्राणि चैकैकशः
संस्थाप्य त्रिविधानि तेषु तदधीशान् ब्रह्मविष्णीश्वरान् ।
संपूज्याथ घटद्वयेषु परितः संस्थापितेषु क्रमा-
द्द्वारास्योभयपार्श्वयोरनुयजेद् दिङ्नागवर्य्याष्टकं ॥ ३ ॥
कुमुदं कुमुदेक्षणं च दक्षक्रमतो वामनपुण्डरीकसंज्ञौ ‡ ।
अथ सर्व्वदृशं च शङ्कुकर्णं सुमुखं चाप्यथ सुप्रतिष्ठितं च ॥ ४ ॥
द्वारेषु क्रमतः स्वकल्पविहितान् दौवारिकान् शाखयो
र्गंगां सूर्य्यसुतामुदुम्बरगतांल्लक्ष्म्यादिकांश्च § ग्रहान् ।
देहल्या मधिदेवतास्त्वमथदेवीं कालरात्रिं पुन
र्गन्धाद्यैरुपचारकै रुपचितैरभ्यर्च्य संप्रार्थयेत् ॥ ५ ॥
ततो वामशाखां समाश्रित्य देहं
समाकुञ्च्य तुष्णीं पदा दक्षिणेन ।
प्रविश्य स्वयं यागवेश्मान्तरादौ
भुवं प्रोक्षयेत् पञ्चगव्यार्घसेकैः ॥ ६ ॥

---

* अनेक मधुरवाद्य शब्दैः ।

† नित्यपूजाव्याख्यानावसरे ।

‡ पुण्डरीकं वामनंच, अल्पाच्तरत्वात्पूर्व्वनिपातः ।

§ आदित्यब्दाल्लक्ष्म्यादीन् तदुपरि ग्रहांश्च ।

विघ्नांश्च त्रिविधान् द्युभूमिखचरान् दिव्यावलोकादिना *

दूरोत्सार्य्य ततो नृसिंहमनुना † सर्व्वादिशः कीलयन् ‡ ।

लाजा चन्दनभस्मसर्षपकुशप्रत्यग्रदूर्व्वाक्षता·

नस्त्रेण प्रतिमुष्टि § सप्तविकिरान् सर्व्वत्र तत्र क्षिपेत् ॥ ७ ॥

कृत्वावीक्षणमिष्टमन्त्रपठनैरस्त्रेण च प्रोक्षणं

तेनास्त्रेण च ताड़नं च कवचेनाभ्युक्षणं देशिकः ।

संस्कुर्य्याच्चतुरध्वमध्यधरणीं ‖ कोणेषु वाय्वादिषु

क्षेत्रेशं वटुकं च भैरवमथो वास्त्वीश्वरांश्चार्च्चयेत् ॥ ८ ॥

मध्ये ब्रह्माणमभ्यर्च्च्य गन्धपुष्पाक्षताम्बुभिः ।

चन्दनागुरुकर्पूरै र्धूपयेन्मण्डपान्तरम् ॥ ९ ॥

द्वारेषु जापकवरेषु पठत्सु धीरं

प्रागादितस्तत ऋगादि-समन्त्रवेदान्

शिष्यस्य मूर्द्धि कृतरक्षणहोतृवर्गः

पार्श्वे वसत्यभयमन्त्रजपप्रसक्ते ॥ १० ॥

पश्चात्कल्पितमण्डलस्य ¶ मृदुनि स्वास्तीर्णशुद्धासने

पद्मं स्वस्तिक मेव वा दृढ़तरं बद्धोपविश्य स्वयं ।

प्रज्वाल्याज्यपरिष्कृतान् प्रतिदिशं दीपानथार्घोचित-

द्रव्याण्यत्र पुरोदितानिच यथास्थानं समासादयेत् ॥ ११ ॥

---

* दिव्यदृष्ट्यादिविघ्नान् पार्थिवांस्तैभौमान् अस्त्राम्बुक्षेपैरान्तरीक्षान् दूराद· पसार्य्य । † आनुष्टुभेनसहस्राक्षरेण वा । ‡ कीलयेदिति (ग) पुस्तके पाठः ।

§ मुष्ट्यां मुष्ट्यां अस्त्रमन्त्रं पठन्नित्यर्थः ।

‖ चतुर्द्वारमार्गमध्यस्थदेशं । ¶ लिखितमण्डलस्य पश्चिमभागे ।

संकल्प स्वस्ति वाच्य द्विजगुरुयतिभि स्तत्र पुण्याहवादं
कृत्वाथ प्रारभेतार्चनविधिमधिकं प्राङ्निनाद्यैव घण्टां।
संन्यस्यर्थादिपूर्व्वासनमनु मनु तत् प्रार्थ्य बद्धाञ्जलि: सन्
वन्देतात्मानुसव्यं गुरुगण-गिरिजा-विघ्नराट्-क्षेत्रपालान् * ॥ १२ ॥
सौदर्शनेन मनुना शिरसि स्वरक्षा-
मन्त्रेण वा प्रतिविधाय सगन्धपुष्पै:।
अस्त्राणुना च करशुद्धिमशेषमुष्टि-
स्फोटैश्च तन्मनुवरै: कलयेद्दशाशा: † ॥ १३ ॥
त्रैलोक्यरक्षामनुना स्वदेहं हुताशशालं परितो विचिन्त्य ‡।
भूतात्मकं कश्मलमात्मदेहं विशोधयेत् शोषणदाहयोगात् ॥ १४ ॥
उत्पाद्य दिव्यामृत संप्लुताङ्गं देवेष्टि-योग्यावयवं ततोऽस्मिन्।
प्राणान् प्रतिष्ठाप्य तथैव तारै: कुर्य्यात्मरुत्संयमनं त्रिकृत्व: ॥ १५ ॥
चतुर्विधामान्तर-मातृकां ततो
बहि: स्वकल्पोदितमातृकामपि।
क्रमेण तत्त्वान्यखिलाक्षरैर्न्यसन् §
करोतु मूलेन तथाऽसुसंयमान् ॥ १६ ॥

---

* अर्घ्यादिपूर्वमासनमन्त्रं सम्यक्न्यस्त्वा अनन्तरं तत् आसनं बद्धाञ्जलि: सन् प्रार्थयित्वा आत्मनो वामेगुरून् दक्षिणे गणेशं सम्मुखे दुर्गां पृष्ठे क्षेत्रपालं च वन्देतेत्यर्थ:। † नाराचमुष्टिस्फोटै: तज्जन्यकृष्टशब्दै: दिग्बन्धनमन्त्रैश्च दशदिशोबध्नीयादि त्यर्थ:।

‡ स्वदेहस्य सर्वदिक्षु वह्निप्राकारं विचिन्त्ये त्यर्थ:।

§ अखिलानि अप्रहतानि अनिरुद्धानि यान्यक्षराणितैर्विपरीतं मकारादिभि र्जीवादि तत्त्वं न्यसन्नित्यर्थ:।

आधार-हृत्करकलेवर-भावनान्ते
न्यासं मनोर्म्मुनि मुखं च कराङ्गयोश्च (१)।
प्रत्यक्षर-प्रतिपदन्यसनं विधाय
बद्धा तथा दशदिशोऽस्त्रमनुप्रजापैः॥ १७॥
ध्यात्वा देवं कर्त्तुमन्तः सपर्य्यामादावर्घं कल्पयेत् शुद्धशङ्खे (२)।
संस्कारार्थं वस्तुनां दक्षिणेऽस्य तद्वत् पूर्व्वं प्रोक्षणीपात्रमेकम्॥ १८॥
ऐशान्यां दिशि वर्द्धनीघट मथो संस्थाप्य तद्वत्ततो
द्रव्यैः स्वैरुदितैः प्रकल्प्य निखिलान् पूजोपचारानपि।
कृत्वाथो मनुशुद्धिमात्मनि निजं तं योगपीठं स्मर-
न्नाधारादि सुरान् (३) यथोक्तविधिना गन्धप्रसूनैर्यजेत्॥ १९॥
आधारे हृदयेऽथ कूर्च्चकुहरे (४) मूलाणुतेजः (५) स्मरन्
वीजेन त्रितयं तदेव पुनरेकीकृत्य हृद्यर्च्चयन्।
तत्तेजः सकलीविधाय (६) वपुषि स्वेष्टां भजेद्देवतां
यन्त्रर्षादिकराङ्गदैवतगणैः सार्द्धं विभूषावधि॥ २०॥
तदायुधादीन्यपि पूजयित्वा भालादिषु द्वादशचिह्नकाणि।
कृत्वात्ममूर्द्धादिषु चाखिलाङ्गे कुर्य्यात् प्रसूनाञ्जलिपञ्चकं च (७)॥२१॥

---

(१) ऋष्यादिन्यासं करन्यास मङ्गन्यासं च विधायेत्यर्थः।
(२) अक्षतनालेशङ्खे, अविच्छिन्ननालस्य शुद्धत्वात्।
(३) आधारशक्त्यादिदेवताः।　(४) भ्रूमध्ये।　(५) मूलमन्त्रतेजः।
(६) व्यापकेन विन्यस्य।
(७) उत्तमाङ्गे हृदाधारे पदोः सर्व्वाङ्गकेषु च इति स्मरणात्।

गन्धंपुष्पं धूपदीपौ समर्प्य सम्भोग्यमुं राजराजोपचारैः ।

होमं कुर्य्यान्मानसं मूलकुण्डेऽर्हंकाराद्यैर्वैश्वदेवं हविर्भिः (१) ॥२२॥

ब्रह्मार्पणाख्य-मनुना निखिलं समर्प्य

ध्यात्वा प्रसन्नमनसं मनसा सुरेशं ।

साष्टंशतं प्रणवसंपुटितं स्वबीजं

जप्त्वा स्वमर्प्य तमथो प्रणमेद्विनीतः ॥ २३ ॥

क्षिप्त्वा दूरे प्रोक्षणीपात्रतोयं भूयस्तद्वै पूर्ववत् पूरयित्वा ।

इष्टंदेवं यष्टु मावाह्य वाह्ये पूर्वे कुम्भं स्थापयेन्मण्डलान्तः ॥२४॥

कुम्भः श्रेष्ठः शातकुम्भस्ततोऽन्यो

रौप्य स्तस्मात्ताम्रजो रीतिजोऽतः ।

सर्व्वाभावे मार्त्तिकः स्यात् प्रशस्तः

शक्तौ सत्यां वित्तशाठ्यं न कार्य्यं ॥ २५ ॥

द्वाविंशत्यङ्गुलोच्चः कलश इहमतो गर्भमेतस्य वृत्तं

स्निग्धं द्व्यष्टाङ्गुलं (२) स्यात्तदुपरिमुखमुन्मत्तपुष्पाग्रशोभि ।

तत्कण्ठोऽष्टाङ्गुलार्द्धस्तदुपरि वलयाकार ओष्ठस्तदर्द्धो

विस्तार स्तन्मुखस्योपरि जलधिमितो मूलतो वेदसंख्यः (३) ॥ २६ ॥

केचिद्विंशत्यङ्गुलं कुर्वते तं गर्भस्तस्मिन् पूर्ववद्वर्त्तुलः स्यात् ।

ओष्ठ स्तस्यार्द्धाङ्गुलस्तन्नलाधोवृत्तं ताव (४) त्त्र्यङ्गुलः कण्ठदेशः ॥२७॥

---

(१) अर्हंतासत्वपैशुन्यं षट्कामाद्या इमानव। आहुतीर्जुहुयान्मन्त्रीति-स्मरणादित्यर्थः। (२) षोड़शाङ्गुलं।

(३) तस्यमुखस्यविस्तारश्चतुरङ्गुल ऊर्द्धभागेमुखस्यसप्ताङ्गुलविस्तारः ओष्ठो-द्व्यङ्गुलोमूलभागेचतुरङ्गुल इत्यर्थः।

(४) तावदितिच्छेदः। तावत् अर्द्धाङ्गुलं कण्ठमूलवृत्तमित्यर्थः।

आदौ पङ्कजमण्डलोपरि गुरु र्गन्धप्रसूनं क्षिपेत्
संस्कुर्य्यादथ वीक्षणादिभि स्ततः पीठार्च्चनं चाचरेत् ।
संपूज्याक्षतपुष्पचन्दनजलैस्तस्योत्तरे गौरवीं
पंक्तिं दक्षिणतो गणेश्वरमथो तान् पीठदेवान् पुनः ॥ २८ ॥

आराध्याधारशक्त्याद्यमरचरणपावध्यथो (१) मध्यभागे
धर्म्मादीन् वह्निरक्षःपवनशिवगतान् दिक्ष्वधर्म्मादिकांश्च ।
मध्ये शेषाब्जबिम्बत्रितयगुणगणात्मव्रजं (२) केशराणां
मध्ये मध्येऽच शक्तीर्नव समभियजेत् पीठमन्त्रेण भूयः ॥ २९ ॥

शालीन् शुद्धशितांश्च मण्डलतया पद्मोपरिष्ठान्न्यसे-
त्तन्मध्ये शितशालितण्डुलकुलं संस्थाप्य निम्नोदरम् (३) ।
दर्भैस्तत्परिकीर्य्य तत्र सुमनःकूर्च्चाक्षतान् (४) निक्षिपे
इक्षेस्तत्रकलाः प्रदक्षिणतया याद्यैर्दशाभ्यर्च्चयेत् ॥ ३० ॥

न्यसेत्तत्र कुम्भं त मस्त्राम्बुधौतं
शितश्यामरक्तप्रभै स्तन्तुभि श्च ।
बहि र्वेष्टितं सान्द्र मब्जागुरूत्थैः (५)
सुगन्धीकृतं धूपधूमैः समन्तात् ॥ ३१ ॥

---

(१) आधारशक्त्यादितआरभ्य कल्पवृक्षपर्य्यन्तमित्यर्थः ।

(२) अनन्तं पद्मं मण्डलत्रयं आत्मचतुष्टयं ।

(३) तत्तण्डुलमध्यंनिम्नं कुर्य्यादित्यर्थः ।

(४) कुशत्रयग्रोटकं कूर्च्चं ।

(५) अब्जपदेन चन्द्रः प्रतिपाद्यस्तेन कर्पूरस्यबोधः ।

न्यसेद्गन्धपञ्चावलिमं यथाव-
ज्जपं स्तार मुच्चैः स्मरन्निष्टदेवम्।
विभाव्याथ पीठस्य कुम्भस्यचैक्यं
ततः पूजयेत्तत्र भानोः कला स्ताः॥ ३२॥
कभादिकैर्वर्णयुगैष्ठडान्तकैः प्रदक्षिणं द्वादशभिर्द्दिषन्मिताः।
ततोऽग्निमाधारमयं विभावयेद्घटस्वरूपं तरणिं विशेषवित्॥ ३३॥
न्यसेत्तदन्तः सहिरण्यकूर्चयुङ्नवं विशुद्धं नवरत्नसञ्चयं।
अलाभतः तस्य च रत्नपञ्चकं गोमेदमुख्यानि चतुः सहेम तत्॥ ३४॥
मुक्ताहीरकपद्मरागसहितं नीलं च वैदुर्य्यकं
गोमेदः सहविद्रुमं मरकतं तत् पुष्परागं क्रमात्।
रत्नानीह नवाहु रागमविदो जात्याविशुद्धानिचे-
न्निर्दोषाणि च तानि बिभ्रति जना ये ते स्यु ऋद्ध्योर्ज्जिताः॥ ३५॥
सविन्दु मुच्चार्य्य विलोममातृकां विश स्ततो मूलमनुं प्लुताक्षरं।
प्रपूरये त्तं घट मम्बुभि स्ततः समातृकार्णौषधिचर्म्मपाचितैः॥३६॥
अथवा दशमूलपुष्पदुग्धद्रुमचर्म्मक्वथितैः कषायतोयैः।
स्तनजद्रुमजन्मसाधितै र्वा विमलै स्तीर्थजलैः शुभोदकै र्वा॥ ३७॥
पलाशचर्म्मक्वथितै र्ज्जलै र्वा सपञ्चगव्यै रथ सन्मृद्भिः।
विलोड़ितै र्वाथ गवां पयोभि रच्छिन्नधारापतितै र्यथावत्॥ ३८॥
कलशजलेऽस्मिन् वसुयुगसंख्याः
स्वरगणपूर्व्वं न्यसतु तथैव।
उड़ुपकला स्ता यजतु च भूयो
जलमयमिन्दुं स्मरतु च मन्त्री॥ ३९॥

आत्माभेदतया तदम्बुरजनीनाथात्मकं चिन्तयं
स्तत् पश्चात् पृथुशङ्खमेक मपरं तद्वत् पुरः स्थापयेत्।
संपूर्य्य (१) कथितैः कषायसलिलै र्द्विष्टदेवोचितै-
र्गन्धै रष्टभि रिष्टगन्धिभि रिदं संमिश्र चालोड़येत् ॥ ४० ॥
गोरचनागुरुकपोन्दुपटीररामकर्पूरकुङ्कुममिति प्रथितं हि शक्तेः। ·
शम्भोः कुचन्दनदलागुरुकुङ्कमाम्बुकुष्ठेन्दुचन्दन मथो मुरवैरिणश्च ॥ ४१
काश्मीरचन्दनजटादि-मुरादिमांसी-
कुष्ठाम्बुलोहनलदं कथितं यथावत्।
गन्धाष्टकं त्रिविध मेतदतीवपुण्यं
प्रीतिप्रदं निखिलरञ्जनकृन्नराणां ॥ ४२ ॥
अभिवाह्य जले दरोदरे शिखिभास्वत्शशिनां पृथक्कलाः।
दशभास्करषोड़शक्रमा दसुसंस्थापन माचरेत् पुनः ॥ ४३ ॥
पञ्चाशत् प्रणवांश सम्भवकलाः प्रत्येकतो वर्गश-
स्तत्रावाह्य ऋच श्च पञ्च विधिवद्धंसादिका स्ताः पठेत्।
पाठान्ते किल वर्गशः प्रतिकलं प्राणप्रतिष्ठां चरे
द्यद्ये तद्विषदं यथामृदुमति र्ज्ञानीत तस्य क्रमं ॥ ४४ ॥
सृष्ट्यादिका दशकलाः कचवर्गयुक्ता
आद्या अकारजनिता मनसाऽभिवाह्य।
ओँ हंस इत्यृच मुदीर्य्य वदन्नमूषां
प्राणादिहेत्यसुगणस्थिति मारभेत ॥ ४५ ॥

---

(१) संपूज्य इति (ग) पुस्तके पाठः।

जरादिका या छतवर्गगाःकला डकारजा स्ता अभिवाद्य पूर्ववत् ।
ऋचं प्रतद्विष्णुरितीरयन् पुनश्चरेदमूषां मसुसंस्थितिं तथा ॥४६॥
तीक्ष्णादिका दशकला अथपादि-शान्तै
र्वर्णैर्युता मलिपिजा अभिवाद्य तद्वत् ।
त्रैयम्बकीमृच मुदीर्य्य पठन्नमूषां
प्राणाद्ददेति तनुयात्तदसुप्रतिष्ठां ॥ ४७ ॥
पीड़ादिका विन्दुभवाश्चतस्त्रोऽभिवाद्य तद्वत् यसहान्त्ययुक्ताः ।
ऋचं पठेत्तत्सवितुर्वरेण्यं ततोऽसुसंस्थापनमाशु कुर्य्यात् ॥ ४८ ॥
निवृत्यादिकाः षोड़श स्युः कला याःस्वरैः संयुता स्ताः समावद्य तत्र ।
ऋचं विष्णुयोनीत्युदीर्य्याथ तासामसुस्थापनं प्राणमन्त्रेणकुर्य्यात् ॥४९॥
विधिरस्य (१) विशेषतोऽत्र पश्चाद्गदिताम्रः खलु भूतशुद्धिशेषे ।
प्रथमावगमाय दीक्षितानामथ सामान्यविधिं प्रदर्शयामः ॥ ५० ॥
प्रागादित्रितयं (२) त्वमुष्य इति च प्राणा इह प्राणका-
स्तद्वज्जीव इह स्थिते च निगदेत् सर्वेन्द्रियाणीति च ।
तद्वद्वाङ्मनश्चक्षुःश्रुतिनसप्राणा इहायान्त्विति
स्वाहान्तं प्रजपन्ननु प्रतिकलं प्राणान् प्रतिष्ठापयेत् ॥ ५१ ॥
तास्ताः प्रपूज्य च पृथक् पृथगित्थमादौ
तत्शङ्खसंस्थसलिलं कलशे निरस्य ।
अश्वत्थचूतपनसच्छदयुक्तगुच्छैः
सूत्रामवल्लिकलिते ललिते स्तदास्यम् ॥ ५२ ॥

---

(१) अत्र विधिमस्येतिपाठोयुक्तः ।

(२) प्राणादीति (घ) पुस्तकेपाठः समसमीचीनः ।

साक्षात् सुरद्रुमधिया स पिधाय मन्त्री

तत्र (१) प्रसूनफलतण्डुलपूर्णमेकम् ।

हैमादिभिर्विरचितं विपुलं शरावं

संस्थापयेत् फलधियाऽमलधीः फलाप्त्यै ॥ ५३ ॥

अभिवेष्टयेत्तदनु कुम्भमुखं नवनिर्म्मलांशुकयुगेन बुधः ।

समलंकृतेऽत्र सुरशाखितले निजपीठपूजनविधिं कुरुताम् ॥ ५४ ॥

आवाह्यास्मिन्निष्टदेवं यथावत् संस्थाप्यामुं सन्निधीकृत्य भूयः ।

संरुध्याथो संमुखीकृत्य तत्तन्मुद्रायुक्तं पञ्चकर्म्माणि (२) कृत्वा ॥ ५५ ॥

सकलीविधाय कलशस्थममुं मनुमातृकाङ्गमुनिन्यसनैः (३) ।

अवगुण्ठनं तदमृतीकरणं निजमुद्रया (४) च परमीकरणम् ॥ ५६ ॥

तदसुस्थितं (५) च विदधद्विधिना पुरतः प्रदर्शितमुद्रममुं ।

परिपूजयेद्गुरुरथावहितः परिचारयुक्तमुपचारगणैः ॥ ५७ ॥

दत्वासनं स्वागतमभ्युदीर्य्य पाद्योदकार्घ्याचमनीयकानि ।

मध्वादिपर्कं पुनराचमं च स्नानं च वासांस्युपवीतमेव ॥ ५८ ॥

अङ्गे विभूषां परिकल्प्य भूय आदर्शमग्रे परिदर्शयित्वा ।

कल्पोदितान्यावरणानि पुष्पगन्धाक्षतैः संपरितो यजेत ॥ ५९ ॥

---

(१) पल्लवोपरि ।

(२) आवाहनसंस्थापनसन्निधानसन्निरोधनसम्मुखीकरणानि च ।

(३) मन्त्रन्यासमातृकान्यासाङ्गन्यासमुन्यादिन्यासैरित्यर्थः ।

(४) महामुद्रयेत्यर्थः ।

(५) तस्यादेवतायाः प्राणस्थापनं ।

पश्चैर्मनुप्रपुटितैः क्रमशः शताद्धै-
र्न्यासक्रमादभियजेत् (१) सकलासु (२) मन्त्री ।
गन्धादिभिः प्रथमतो मनुदेवतासु
त्रैलोक्यमोहन इति प्रथितः प्रयोगः ॥ ६० ॥

घण्टां संपूज्याथ धूपं च दीपं दत्वा भूयो गन्धपुष्पाचमांश्च ।
हृद्यं सद्यः सिद्धनैवेद्य मस्मै संपाद्याग्रे ह्यर्पयेन्मन्त्रपूर्वम् ॥ ६१ ॥

अथ संस्कृते हुतवहेऽमलधी
रभिवाह्य देव मभिपूज्य पुनः ।
जुहुयात् शिताज्यत युतेन (३) पयः
परिपाचितेन (४) शुचिना चरुणा ॥ ६२ ॥

पञ्चविंशति संख्यया पुन राज्यत श्चतुराहुती-
र्व्याहृतित्रयमेकशस्त्रिश उद्दिशन्नथ (५) होमयेत् ।
मूलमन्त्रमुदीर्य्य साष्टसहस्रहोममथाचरेत् (६)
शेषपायससर्पिषा ऽखिलपार्षदान् बलिभिर्य्यजेत् ॥ ६३ ॥

---

(१) मन्त्रपुटितैः पञ्चाशता मातृकाक्षरैर्न्यासक्रमेण ललाटादिस्थानेषु पूजयेदित्याशयः ।

(२) सकलासु कलासहितासु ; इत्यस्य मनुदेवतास्वित्यनेनान्वयः ।

(३) शर्कराघृतयुक्तेन ।

(४) दुग्धपाचितेन ।

(५) ओँ भूः स्वाहा ओँ भुवः स्वाहा ओँ स्वः स्वाहा ओँ भूर्भुवः स्वः स्वाहा इत्युदीर्य्यं होमयेदित्यर्थः ।

(६) मूलमुच्चार्य्य अष्टाधिकसहस्रहोमं कुर्य्यात् ।

एवंकृत्वा वैश्वदेवाङ्गहोमं
तं शुष्माणं (१) पीठमूर्त्तौ विलाप्य।
मन्त्रं जप्त्वा दिक्शतं वा शतं वा
तं देवस्या सव्यपाणौ (२) समर्प्य ॥ ६४ ॥

संपाद्य पानीय-सुधां समर्प्य दत्वाभ उद्वास्य मुखार्चि (३) रास्ये
नैवेद्य मुद्धृत्य निवेद्य तत्तच्चण्डाय भूमौ मुपलिप्य भूयः ॥ ६५ ॥

गण्डूष-दन्तधमनाचमनस्वहस्त-
मृज्यानुलेपमुखवासकमाल्यभूषाः (४)।
वीटीं समर्प्य च सचामरसातपत्र-
तौर्य्यत्रिकैः सुहित (५) मर्च्चयतात्पुनस्तं ॥ ६६ ॥

गन्धादिभिः सपरिचार मथार्घमस्मै
दत्वा निधाय कुसुमाञ्जलि मादरेण।
स्तुत्वा प्रणम्य शिरसा चलुकोदकेन
स्वात्मान मर्पयतु तच्चरणाब्जमूले ॥ ६७ ॥

---

(१) वह्निं।

(२) दक्षिण हस्ते।

(३) मुखस्थितं नैवेद्यगतं तेजः मुखे उद्वास्येत्यर्थः।

(४) दन्तधमना—दन्तकाष्ठिका
हस्तमृज्या—हस्तमार्ज्जनचूर्णं
मुखवासकं—मुखप्रोञ्छनवस्त्रं।

(५) तृप्तं।

ब्रह्मार्पणाख्यमनुना त्वसमर्पणाख्य-
मन्त्रेण चाप्यथ तदायुधभूषणानि।
अभ्यर्च्चये न्मलयजादिभि रात्मदेशैः-
साधारणानि च यथोदितमूर्त्तिमन्ति ॥ ६८ ॥
तदावरणदेवताः सपदि देवदेहे तदा-
विलाप्यःमनसा गुरुर्ज्जलनिधौ तरङ्गानिव।
सुतम ममुमासनोपरिनिविष्टमिष्टं स्मरेत्
सुधामयतनुं ततोऽखिल नृपोपचारैर्युतं ॥ ६९ ॥
ध्वजतोरणदिक्कलशादिगता-
मपि मण्डप-मण्डल-कुण्डगतां।
अभियोज्य चितिं कलशे कुसुमैः
परिपूज्य जपेत् पुन रष्टशतं (१) ॥ ७० ॥
समर्प्य तं पिष्टकपीठसंस्थं समिद्ध (२) मारात्रिक मर्पयित्वा।
कर्पूरदीपै रथ सप्तवर्त्त्या नीराजयेन्मङ्गल-दीपकैश्च ॥ ७१ ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्वस्वे कलशार्च्चनविधिर्नामाष्टमः संग्रहः ॥ ० ॥

---

(१) ध्वजादिषुव्याप्तांचितिं परीक्ष्यैतस्यां कुसुमैः संचीय कलशेनियोज्य पुनरष्टशतं जपेदित्यर्थः।

(२) दीप्तं।

ततः कर्करीं काञ्चनाद्यैः प्रकृष्टां
विशालोदरीं वर्त्तुलाष्टाङ्गुलास्याम् । (१)
कनिष्ठाग्रतुल्यप्रणालेन तीर्थ्य
क्षुखैकेन युक्ता मधोन्यस्तचक्राम् ॥ १ ॥
ऐशान्यां दिशि विकिरैर्विशोधितायां
संस्थाप्याम्बर-कनकैः स्रगादिजुष्टाम् ।
अस्त्रेणामलसलिलैः प्रपूर्य तस्या-
मावाह्यार्चयतु तदस्त्रदेवतां च ॥ २ ॥
सिंहस्था मरुणतमा मतीवभीमां
बिभ्राणां फलक मसिं च पश्चिमास्याम् ।
संपूज्यास्त्रमनुमुदीर्य्य वीर्य्यवन्तं
गन्धाद्यै रुपचरणैश्चलासनेन (२) ॥ ३ ॥
तामादाय बहिर्भवन् गुरुरसौ तद्दैवताज्ञां पुरो
दिक्पालाः खलुरक्षते त्वनुदिशं चोच्चैस्तरां श्रावयन् ।
तन्नालाध्वनि मुक्तयाऽनुगतया तस्याः पयोधारया
पर्य्यावृत्य (३) परं प्रदक्षिणतया भूयो विशेन्मण्डपम् ॥ ४ ॥

(१) वर्त्तुलं अष्टाङ्गुलमास्यं यस्याः तां ।
(२) दक्षिणमित्यर्थः ।
(३) परितो भ्रान्त्वा ।

संस्थाप्य तां पूर्वपदेऽस्त्र मुक्त्वा स्थिरासनेऽभ्यर्च्य पुनस्तदस्त्रम्।
सायं सति स्नानविधिं समाप्य सन्ध्यां च कुर्य्याद्विधिवत्सशिष्यः॥ ५॥
आवेष्ट्याथो मङ्गलवीजाङ्कुरपात्रैः
प्रादक्षिण्यं मण्डल मेषामुपरिष्टात्।
न्यस्येद्दीपान् पिष्टकल्कृप्तान् पृथुदीपान्
प्राची-वक्त्रान् गोघृतपूर्णानथ मन्त्री॥ ६॥
शालामध्ये तत्र निर्म्माय चुल्लीं सुलिप्यामुं संस्कृतेनानलेन।
प्रज्वाल्यास्मिन् स्थापयेत्पाकपात्रं ताम्राद्युत्थं क्षालयन्नस्त्रमन्त्रैः॥७॥
अथ पञ्चदश-प्रसृति-प्रमितान् (१) शितशालिसमुत्थित-तण्डुलकान्।
परिशोध्य जलैरभिमन्त्र्य पुनर्म्मनुनाऽष्टगुणे पयसि क्षिपतु॥ ८॥
कवचेन तस्य पिधाय मुखं चषकेण परेण फटा (२) शुचिना।
हरिदिङ्मुख एवमनुं प्रजपन्मृदुनाज्वलनेन पचेच्च चरुम्॥ ९॥
सिद्धे तस्मिन् पायसे गव्यसर्पिस्तप्तां क्षिप्त्वा मन्दमन्दं स्रुवेण।
यावत् स्विन्नं स्यात्तदन्नं क्रमेण तावद्दर्व्यालोड़येद्धातुमय्या॥ १०॥
एवं मूलेनाभिघार्य्याथ चुल्ल्या उत्तार्याग्रे भाजनं तत्कराभ्यां।
अस्त्रच्छिन्नैरास्तृते तत्र दर्भैः कल्कावर्भे स्थापयेन्मण्डलान्तः॥ ११॥
पात्रत्रये तद्विभजे त्रिभागं भागेन तत्र प्रथमेन भागम्।
अभ्यर्च्चयेत् पञ्चविधोपचारैः कृताधिवासे कलशेऽभिवाह्य॥ १२॥
द्वितीयभागं जुहुयाद्धुताशे सुसंस्कृते मूलमनुप्रजापैः।
द्विधाविभज्याथ गुरुः सशिष्यो भुञ्जीतभागं विधिवत्तृतीयम्॥ १३॥

---

(१) पाणिसंकुचः प्रसृतिः प्रसृतिद्वयपलामिता।
(२) फटा अस्त्र मन्त्रेण शुचिनापात्रान्तरेण सुखं पिधाय।

आचम्याथ गुरुर्विशोधितमुखः स्वाचाम्य शिष्यं तथा
मन्त्राङ्गैः सकलीविधाय च तनौ संवासयेत् प्राङ्मुखम् ।
छद्राग्रं द्विषडङ्गुलं च सरसं सत्क्षीरवृक्षादिजं
दत्वास्मा ऋजुदन्तकाष्ठममुना दन्तान् पुनः शोधयेत् ॥ १४ ॥
धौतांघ्रिपाणिवदनं सदनं प्रविश्य
तं शिष्य मिष्टमनुनाभिमृषन् प्रसन्नं ।
रक्षां विधाय च शिखा-मनुबन्धनेन
निद्रापयेत् कुशकृतशयनेऽथवेद्यां ॥ १५ ॥
इष्टं देवं प्रार्थयेद्देशिकेन्द्रः सुखप्राप्तं तस्य शिष्यस्य रात्रौ ।
अन्तर्बाह्ये त्वं चरस्यप्रमेय (१) स्वप्ने भद्रं दर्शयस्वैन मद्य ॥ १६ ॥
इत्युक्त्वा सविधे तस्य दर्भानास्तीर्य्य देशिकः ।
शयीत शुद्धमनसा भगवन्तं स्मरन् मुदा ॥ १७ ॥
अधिवासविधिः समीरितः सकलाभीष्टफलप्रदानभूः ।
अमुना विधिनाधिवासितो (२) ऽखिलसिद्धिं लभते परं नरः ॥ १८ ॥
वहन्नाडीपार्श्वं प्रसभ मुपपीड्याथ शयितः
स्मरन्निष्टं देवं निशि परिचितं स्वप्न मखिलम् ।
यथादृष्टं स्वस्थोऽचलितकचनीविः (३) स्वमनसा-
ऽवधार्य्याग्रे ब्रूयादुषसि च गुरोः साधकशिशुः ॥ १९ ॥

---

(१) हे प्रमाणागम्यप्रभो ।
(२) कृताधिवासः ।
(३) रोगाद्युपद्रवरहितोऽसङ्कुचितकेशोऽमुक्तनीविश्च ।

अंसद्वयेऽस्य निजहस्तयुगं निधाय
तस्मिन् स्वदैवतमहः प्रतिसंक्रमय्य।
विद्यां दिशेत्तदनु दक्षिणकर्णमूले
अष्टाक्षरामवगमावधि वा त्रिवारं॥ ५८॥

अधिकारिविचारतः पुरा कथिता या मनुदानयोग्यता।
तदनुक्रमतो विशोधितं (१) मनुमस्मै प्रददीत देशिकः॥ ६०॥

एकान्तपक्षे निजमन्त्रमादौ दत्वाऽस्य गायत्र्यभिधां च विद्यां।
समस्तपक्षेऽखिलदेवताना मङ्गाङ्गिभावं प्रविचिन्त्य विद्यात्॥६१॥

शैवे सूर्य्यगणेशविष्णुशिवशक्तीनां च दद्या (२) न्मनून्
सूर्य्येभास्यशिवाम्बिकासुरजितां मन्त्रान् क्रमाद्वैष्णवे।
शाक्ते विघ्नरवीशविष्णुगिरिपुत्रीणां मनून् वैघ्नपे
विष्णीशार्कशिवागजाननमनून् सौरेऽर्य्यमान्तानिमान् (३)॥ ६२॥

उच्चार्य्य तद्रसनया गुरुरात्मविद्यां
दद्याज्जलं किमपि तस्य च दक्षपाणौ।
मन्त्रं जपेद्दशशतं विधिवत्ततोऽष्टौ
तन्मन्त्रशक्तिफलहानिरितोऽन्यथा स्यात्॥ ६३॥

गुरुणा विधिवत् प्रसादितं मनुमष्टोर्द्ध्वशतं (४) प्रजप्य शिष्यः।
अभिवन्द्य ततः शृणोतु सम्यक् समयान् भक्तिभरावनम्रमूर्त्तिः॥६४॥

---

(१) सिद्धार्य्यादि शुद्धत्रनुकूलं।
(२) पंचानांमध्ये एकोऽङ्गीप्रधानं चत्वार्य्यंगानिद्दतिबोध्यं।
(३) इमान् विष्णादिमन्त्रान् सूर्य्यमंत्रंच पश्चाद्द्यादित्याशयः।
(४) अष्टोत्तरशतमित्यर्थः।

भूयः परीत्य प्रणिपत्य (१) देशिकं
तस्मै परस्मै पुरुषाय (२) देहिने ।
तां वित्तशाठ्य (३) परिहृत्य दक्षिणां
दत्वा तनुं स्वां च समर्पयेत् सुधीः ॥ ६५ ॥

गोभूवस्त्रालंकृतिः पीठशय्या वेश्मोद्यानग्रामवासादिकांश्च ।
दद्यादाचार्य्याय तुष्ट्यै मुरारेः सर्व्वस्वं वा तत्तदर्हं तदर्हं ॥ ६६ ॥

वाससी श्रवण-भूषण-मुद्राहोमकृत्सुखजवि प्रवरेषु (४) ।
ईश्वरार्पण मिति प्रतिदद्याद्दक्षितो द्विजमुखेरितवाग्भिः ॥ ६७ ॥

कुम्भादिकंच सकलं गुरवे निवेद्य
संपूजयेद्द्विजवरानपि भोज्यजातैः ।
तृप्तेषु तेषु वितरेन्मुखवास-माल्य-
गन्धांशुकानि च यथाविधि सुप्रतीतः (५) ॥ ६८ ॥

अच्छिद्रतां समुपधार्य्य कृतक्रियाणां (६)
सर्व्वान् प्रसाद्य विसृजे स्वनुजान् विनीतः ।
कुर्वन्त्यनेन विधिना य इहाभिषेकं
ते संपदां निलयनं हि त एव धन्याः ॥ ६९ ॥

---

(१) प्रदक्षिणीकरणं नमस्कृत्य ।
(२) परमेश्वरस्वरूपाय ।
(३) वञ्चनायां ।
(४) वासः कुण्डलद्वयमुद्रिकाश्च ऋत्विग्भ्योदद्यादित्यन्वयः ।
(५) अतिविश्रब्धचित्तः ।
(६) कृतकर्म्मणामच्छिद्रावधारणं कृत्वा ।

शिष्योऽथाचार्य्यपार्श्वे त्रिदिन मनुवसंस्तन्मुखाद्भक्तिनम्रो
मन्त्रार्थं मन्त्रकल्पं तदुपहितफलं साधनं सिद्धि योगान्।
विज्ञाय ज्ञाततत्वो गुरुसुत-गृहिणी-शिष्य-भृत्यान् प्रसाद्य
स्वर्ण स्रग्गन्धमाल्यादिभि रथ निलयं स व्रजे दह्नि तुर्य्ये ॥ ७० ॥
यदि तत्त्रिदिनान्तरे कदाचित् स्वगृहं याति स साधकः प्रमादात्।
गुरुदत्तमनूदितं हि तेजो गुरु मभेति यथाऽब्धि मम्बुवृष्टं ॥ ७१ ॥
ततः प्रभृति मन्त्रविद्विधिवदिष्टदेवे गुरौ
मनौ च मनसा गिरा स्ववपुषा भवे द्भक्तिमान्।
न दम्भ मिह संश्रये न्नच भिदां प्रपश्येत् क्वचि
न्न सिद्धि मुपगच्छति त्रिषु विरक्त-चित्तो नरः ॥ ७२ ॥
याव ज्जीवे द्देशिक स्तावदेनं नित्यं श्रद्धाभक्तियुक्तोऽतियत्नात्।
अर्च्चेत् साक्षाद्विष्णुबुद्ध्योपचारै राज्ञाधीनः पादसम्वाहनाद्यैः ॥ ७३ ॥
एकग्रामे संस्थितं नित्य मर्च्चे न्मासं मासं योजनाभ्यन्तरस्थं।
वर्षं वर्षं चे त्ततो विप्रकृष्टं दूराद्दूरं चे न्नमस्ये त्तदाशां (१) ॥ ७४ ॥
इत्थं शिष्यं प्रपन्नं गुरु रथ समयाञ्छिक्षये (२) दुच्यतेत
द्दत्स स्वाचार युक्तोऽनुदिन मनलसः प्रातरुत्थाय कुर्य्याः।
काले स्नानादिकृत्यं त्रिषवण मथवा पञ्चकालं (३) परेशं
सेवेथाः पञ्चयज्ञान् जपनतिनिगम-स्तोत्रपाठं न लङ्घ्यः ॥ ७५ ॥

(१) गुर्वधीष्ठितदिशं।

(२) समयान् नित्यनियमान् शिक्षयेदित्यर्थः।

(३) त्रिकालं प्रातर्मध्याह्नसायाह्नेषु। पञ्चकालं प्रातःपूर्वाह्णमध्याह्न सायाह्न-नक्तेषु।

भुञ्जीथा इष्टदेवार्पित-फल-सलिलान्नादिकं द्वि: सकृद्वा (१)
नित्यं स्या देवमन्त्रागमनिगमरहश्चिन्तयाऽव्यर्थकाल: ।
एकादश्यादि-पर्वव्रत-नियतमना जागरूक: स्वधर्म्मे
लोकानुद्वेगदायी भव भवनिगडोच्छेदनोद्योगशील: ॥ ७६ ॥
नाश्नीया: कांस्यकाष्ठायसवसनवटाश्वत्थपत्रादि-पात्रे
मत्स्यं मांसं मसूरादिक-मधुमदिरा-यातयामौदनाद्यं ।
दुग्धं चानिर्विशं (२) दृष्टलवण-फल-शाकामिषं (३) दीक्षितान्नं
नित्यानुष्ठानपूर्व्वान्तिमरजनिशशीनग्रहप्राग्दिनान्ते (४) ॥ ७७ ॥
गुर्व्वग्नयो ब्राह्मणाग्नयो रथ गुरुपठतो: पुंस्त्रियो र्गोद्विजानां
राज्ञां मध्ये न गच्छेद्वसन मपि दधीथा न नीलं न रक्तं ।
सेवाना मापराधान् दशनदशमितान् (५) वर्ज्जयेद् गुर्व्वनुज्ञा-
शय्याच्छायातियानं (६) शयन मपि दिवासन्ध्ययो र्धीर जह्या: ॥ ७८ ॥
उत्तिष्ठं स्तोयपानाचमनगुरुजरद्वन्दनं नो विदध्या:
प्रातस्तैलं निषिद्धेऽह्नि च न कलये रन्यदेवावमानं ।
त्यक्त्वा मन्त्रं न कुर्य्या स्तिलक मपि शिखावन्धनं यज्ञसूत्रा-
दानं मुद्रां च मालां गुरु मपि च मनुं गोपयेरिष्टदेवं ॥ ७९ ॥

---

(१) द्विर्दिवारात्रोर्द्विवारं छायाकाले एकवारं नक्तं वाभुञ्जीथा इत्यर्थ: ।

(२) प्रसवसप्तदशाहाभ्यन्तरे गोदुग्धं दुग्धमनिर्विशमिति निषेधात् ।

(३) दृष्टलवणं फलामिषं जम्बीरादि, शाकामिषं कलम्बादि ।

(४) नित्यानुष्ठानात्पूर्वं रजन्या: शेषयामे, शशिसूर्य्ययोर्ग्रहणात् पूर्वं सन्ध्यायां च नाश्नीया इत्यन्वय: ।

(५) सेवापराधान् द्वात्रिंशत् नामापराधान् दशच वर्ज्जये इत्यन्वय: ।

(६) गुरोराज्ञालंघनं शय्यालंघनं छायालंघनं चेत्यर्थ: ।

इत्यादीन् समयान् समुन्नयति यो नित्यं गुरोराज्ञया
शास्त्रात् कांश्चिदवेत्य कांश्चन पुनर्लोकोपचारादपि (१)।
स प्राप्येह समस्तसिद्धिमतुलां भुक्त्वेह भोगान् सुखं
संजीवन् शतवत्सरानुपरमे लोकान् व्रजत्यक्षयान्॥ ८०॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्वस्वे मन्त्रदीक्षाविधिर्नाम एकादशः संग्रहः॥ * ॥

द्वादश संग्रहः।

क्रियावतीयं विहिताऽत्र दीक्षा संगृह्य सर्व्वागमसारभूता।
अथापरासां तिसृणां विधानं वक्ष्यामि विख्यातफलं नृलोके॥ १॥
तत्र वर्णमयी दीक्षा कथ्यतेऽथ यथाक्रमं।
शारदातिलकाद्युक्तप्रकारेण यथामति॥ २॥
वर्णाः सर्वे पुंप्रकृत्यात्मकाःस्यु
र्देहोऽयं वे तद्विधार्णात्मको यत्।
तस्मान्न्यस्येत् सृष्टिमार्गेण वर्णान्
स्वस्वस्थानान् संहरेत्तान् विलोमात्॥ ३॥
लीनेषु वर्णेषु विलीनतत्वो गुरुः स्वचैतन्यमहः परेशे।
नियोज्य तस्मात् पुनरेव वर्णानुत्पाद्य सृष्ट्वाऽस्य तनौ न्यसेच्च॥ ४॥
शिष्ये स्वचैतन्य मथो नियुज्यात्तस्मादसौ दैवतभावमेत्य।
शिष्यो भवेद्दिव्यतनु स्तदुक्त्या विनाऽभिषेकं विधुनोति दोषं॥ ५॥
गुरोः प्रसादादधिगम्य विद्यां स साधयत्याशु खिलान् पुमर्थान्।
एषा मता वर्णमयीह दीक्षा साक्षात्परानन्दफलप्रदात्री॥ ६॥

(१) लोकव्यवहारादपि।

कलावती मथो ब्रुवे बलादबोधबन्धनं ।
विवृश्च (१) मोचयेन्नरं परं पदं दिशत्यरं ॥ ७ ॥
भूतानां शक्तिभूता इह जगति कला स्तानिवृत्त्यादिकाय-
स्तस्मात्ता वेधयित्वा शिशुवपुषि गुरु: शोधये त्तस्य देहं ।
ध्याये त्तज्जानुयुग्मावधि चरणतला त्तां निवृत्तिं तदूर्द्ध
नाभ्यन्तं च प्रतिष्ठां तदुपरि गलकूपावधि व्याप्य विद्यां ॥ ८ ॥
तस्मात् (२) शान्तिं च भालावधि तदुपरिगां (३) शान्त्यतीतां क्रमेण
व्याप्तिं ध्यात्वा कलानामिति वपुषि शिशो: संहरेत्ता नियोज्य ।
स्थानात् स्थानान्तरेऽथ प्रशममुपगतास्ता: शिवे धाम्नि सर्वा
ध्यायेत् शुद्धात्मवस्तुप्रतिममथ शिशुं दीक्षयेत् शुद्धसत्वं ॥ ९ ॥
इयं कलावती मता सुदिव्यभावदायिनी ।
विनाऽभिषेक मंहस: पुन: पुनाति मानवं ॥ १० ॥
अथ वेधमयीं वक्ष्ये दीक्षां संसारमोचनीं ।
यद्वेधशुद्धवर्ष्माणं न वाधंते महाधय: ॥ ११ ॥
शक्त्युत्थानध्यानमार्गेण पूर्व्वं
ध्यायेद्देवीं शिष्यदेहान्तराले ।
मूलाम्भोजे शम्भुशक्तिस्वरूपां
भित्वा चक्राण्यूर्द्ध्वं मूर्द्ध्नं व्रजन्तीं (४) ॥ १२ ॥

---

(१) विच्छिद्य ।

(२) गलकूपात् आरभ्य भालावधि शान्तिं चतुर्थीं कलां ध्यायेदित्यन्वयः ।

(३) तदूर्द्ध्वं गतां ।

(४) सहस्रदलपद्मान्तं गच्छन्तीं ध्यायेदित्यर्थ: ।

तन्मूलाम्भोजवर्णानुपरि वशषसां श्लिङ्गपद्मस्थिते ऽब्जे
संहृत्यामुं च तत्रस्थित वभमयरांस्त्रं च नाभिस्थविष्णौ ।
विष्णुं तच्चक्रसंस्थाच्चरगण मथ तं डादि फान्तं हृदब्जे
रुद्रे संहृत्य तं तत्स्थितनिखिललिपीः कादिठान्ता द्विषट्ताः (१) ॥१३॥
कण्ठाब्जस्थे स्वरे (२) तं तदुपहितलिपीः षोड़शाच स्तदूर्द्धं
भ्रूमध्याम्भोजसंस्थे परमहसि सदाशब्दपूर्व्वं शिवे च ।
तं तत्रस्थौ च लचौ तदुपरि विलसद्विन्दुमध्येऽथ विन्दुं
संहृत्योर्द्धं कलायां तदुपरि किल तां संहरेच्चाथ नादे ॥ १४ ॥
नादान्ते तं च नादं तदुपरि परमानन्दतेजःप्लुताया
सुषुम्नायां विशुचक्रान्तर-महसि च तां तद्गुरोश्चक्रमध्ये ।
इत्थंनीत्वात्मना तामपि परमशिवे (३) वेधयेन्मूलशक्तिं
गुर्वाज्ञाच्छिन्नबन्धः पतति पदतले दिव्यदेहोऽथ शिष्यः ॥ १५ ॥
असौ प्रपद्याथ गुरोः स्वविद्यां विद्योतते देववदाप्तसिद्धिः ।
दीक्षा ऽन्तिमा वेधमयी मतेयं सम्वित्प्रदा, शं वितनोति नृणां ॥१६॥
दीक्षाविधि निगदितोऽय मनेकभेद
स्तत्रैक माश्रयतु मन्त्रविशेषलिप्सुः ।
तत्रापि कर्त्तुमखिलं खलु चेदशक्तः
स्वात्मान मूनविधिना (४) विमलीकरोतु ॥ १७ ॥

(१) द्वादशलिपीन ।
(२) विशुद्धचक्रस्थितेश्वरे संहृत्येत्यन्वयः ।
(३) तुरीयातीते वेधयेत् स्थापयेदित्यर्थः ।
(४) सामान्यविधिना ।

कृत्वा च्छायामण्डपं मण्डपं वा
तस्मिन् कुण्डं स्थण्डिलं वा ऽथ वेद्यां ।
तत्पूर्व्वस्यां (१) सर्व्वतो भद्रनाम्नि
न्यस्येत् कुम्भं मण्डले तण्डुलान्तः ॥ १८ ॥
संपूर्य्य तं पञ्चकषायतोयैः सगन्धमाल्यांशुककूर्च्चरत्नैः ।
सपल्लवैः पूर्व्ववदेव कृत्वा तत्रेष्टदेवं गुरु रर्च्चयित्वा ॥ १८ ॥
होमंकृत्वा विधिवदमुना (२) मूलमन्त्रेण वह्नौ
वष्टोपेतंशत मथ घृतै रिन्द्रियोद्घाटनान्ते ।
क्षिप्त्वा शिष्योपरि किमपि तत् संस्रवं (३) कुम्भतोयैः
संस्नाप्या मुं विमल वपुषं पूर्व्ववद्दीचये त्तः ॥ २० ॥
सामान्यदीक्षाविधि रेष उक्त
स्तत्राप्यशक्ता वुपदेश माहुः ।
निजानुकूले दिवसे स कार्य्यः
क्षेत्रेऽथवा देवगृहे गुरोर्वा ॥ २१ ॥
नियुक्तसम्भार (४) ममुं गुरुः पुरो
घटं प्रतिष्ठाप्य पुरोवदम्बुभिः ।
तदम्बुसेके र्हृतकल्मषं शिशुं
विद्यां दिशे च्चेदुपदेशभेदतः ॥ २२ ॥
पुण्यक्षेत्रे चन्द्र सूर्य्य-ग्रहे वा कश्चिद्भाग्यात् सद्गुरुलभ्यते चेत् ।
तेनाज्ञप्तो मन्त्र माश्वाददीत प्राहुः केचिच्चैव मेवोपदेशं ॥ २३ ॥

---

(१) कुण्डस्य प्राच्यां । (२) शिष्येण । (३) संपातार्ष्यं ।
(४) नियुक्तः गुरवे प्रत्यर्पित सम्भार येन तममुशिष्यं ।

गुरो रलाभे यदि कश्चन स्या द्विद्यान्तरं (१) लब्धुमतीवलुब्धः।
सोऽभ्यर्च्य भक्त्या विधिनेष्टदेवं पठेदनुज्ञाप्य (२) विलिख्य विद्यां ॥२४॥

विद्योपलब्धिः कथितेह कश्चि-
दित्यादिना स्यादिह मन्त्रलाभः।
भूयःफलं (३) भूयसि कर्म्मणि स्या
दल्पे तथाऽल्पं फलतीति निष्ठा ॥ २५ ॥

केचित् शापाच्छिन्न (४) रुद्धादिदोषा द्वेराद्याविश्वासतो वीर्य्यहीनाः।
मन्त्राः पुंसां गुर्वनुज्ञाऽगृहीता अप्यार्थ्याणां नात्र शीघ्रं फलन्ति ॥२६॥

पुरश्चरणत स्ततः (५) स्वमहसा (६) तमाप्याय्य-
म्मनुं जपति यः पुमानखिलसिद्धिमेवैति सः।
अतो मुनिमतं ततं निगमतन्त्रवाग्विस्तरैः (७)
पुरश्चरणजं पुरो विधि मधिब्रुवेऽनुक्रमं ॥ २७ ॥

(१) पुनरप्यन्यां विद्यां नतु प्रथमतोमूल विद्यां।

(२) देवं चानुज्ञाप्य तदग्रे विद्यां विलिख्य पठेदित्युपदे शान्तरं एतां विद्यापालब्धिं प्राहुः।

(३) कर्म्मभूयस्त्वेफलभूयस्त्वमितिन्यायात् बहुलेकर्म्माणिफलं बहुलं स्यादल्पेऽल्पं किंति तत्वं विद्यात्।

(४) च्छिन्नः रुद्धः शक्तिहीनः इत्याद्युक्तौ।

(५) यतः शीघ्रं फलति तस्माद्धेतोः।

(६) अथ पुरश्चरण प्रस्तावितुं मादो स्वहेतु माविष्करोति; पुरश्चरनेन स्वतेजसा स्ववीर्य्येण तं मनुं आप्यायन् वर्द्धयन् यः मन्त्रं जपतीति।

(७) वेदवाक्यैरागमवाक्यैश्च।

जपेन होमेन च तर्पणेन संमार्ज्जनेन द्विजभोजनेन।
एतैर्युतं पञ्चभिरङ्गकल्पैर्ब्रुवन्ति पौरश्चरणं नृलोके ॥ २८ ॥
आदौ यादृक् स्थान मास्थाय मन्त्री मन्त्रं जप्त्वा तादृशीं सिद्धि मेति।
तस्मात् स्थानानि ब्रुवे यत्र सम्यक् स्वल्पं जप्त्वा सिद्धि माप्नोत्यनल्पां ॥२९॥
शाण्डिल्याश्वत्थधात्रीतरुतन्नतुलसीकाननोद्यानगोष्ठ
श्रेष्ठक्षेत्रेष्ठ देवालयजल (१) धिनदीतीरतोयान्तराणि।
गुर्व्वन्तरागारमा (२) राद्गिरिशिखरगुहोपत्यकाश्च द्विविक्ता
न्यार्य्यावर्त्ते तथैतान्यृषय (३) इह जगुः सर्वसाधारणानि ॥ ३० ॥
नृणां गृहजपादिमान्यधिक मिष्टसिद्धर्थिने
क्रमा द्दशगुणोत्तरां ददति सिद्धि मेकैकशः।
इतोऽन्यदभयस्थलं यदि मनोरमं (४) लभ्यते
तदप्यभिमतं तपोजपविधौ मुनीनामपि ॥ ३१ ॥
शैवानां शून्य मुक्तं (५) शिवसदनमिदं सेश्वरं (६) वैष्णवानां
शाक्तानां तु श्मशानं त्रिपथ मपि शवः शून्यशृङ्गाटकं (७) च।
सौराणां (८) सातपाम्भो विपुल वटतलं गाणपत्यस्य चैतत्
स्थानं शस्तं विशेषान्मनु मनु जपतां स्वेष्टदेवालयं वा ॥ ३२ ॥

---

(१) समुद्र नद्योस्तीरं तोयमध्यञ्च।
(२) गुरुगृहं अग्निहस्च निकटस्थगिरेगुहा शृङ्गासन्नभूमिश्च।
(३) इहार्य्यावर्त्ते देशे एतानि विविक्तानि चेत् तदाच्चीनान्यथा।
(४) यत्रानुकूलप्रश्नयुज्यादिति यत्रदेशे सौमनस्यं तत्रमुल्लादिति।
(५) उक्तता हमतेन शून्यं शिवं गृहं कोन्दारादिकं।
(६) इदं शिवगृहं सेस्वरं चेत् हरिहरयुक्तमित्यर्थः।
(७) विविक्तचतुस्पथं। (८) आतपसहितजलसौराणां।

एषा मेकतमं क मप्यभयदं देशं समं संश्रयन्
गायत्रीमयुतं जपेन्नियमित स्तद्दोषनुत्त्यै पुरः ।
भच्याहारविहारसाधनकृतेऽवच्छिन्नमद्रिद्रुम (१)
ग्रामाम्बुगादिभि राददीत विभवत् क्षेत्रं च तत्रात्मनः ॥ ३३ ॥
अमुकस्य शुसिद्धये मनोरिय मुर्व्वीं परिगृह्यते मया ।
कृतकालविशेषदेशवागिति संकल्प्य भुवं प्रमापयेत् ॥ ३४ ॥
ग्रामिक्रोशमितं तथैव नगरे क्रोशद्वयं वा नदी
शैलादीच यदृच्छया परिमितं क्षेत्रं गृहीत्वाऽऽत्मनः ।
दिक्ष्वष्टासु निबन्ध चास्त्रमनुना क्षीरद्रुशङ्कूनकु
प्याल्लान् क्षेत्रपतिं च तेषु वलिभि स्तद्विघ्नशान्त्यै यजेत् ॥ ३५ ॥
क्षेत्रस्याथ क्षेत्रनाथस्य नाम्ना
मन्त्रस्यापि स्वस्य चान्योन्यमैत्रीं ।
कर्म्मारिस्थः (२) कूर्म्मचक्रेण पूर्वं
वच्ये तावत्तद्विवेकप्रकारं ॥ ३६ ॥
प्राक्प्रत्यगग्रा विलिखे च्चतस्रो
रेखा स्तथा चोत्तरदक्षिणाग्राः ।
कोष्ठेषु तत्राष्टसु दिग्विदिक्षु
प्रदक्षिणं प्राक् क्रमतोऽष्टवर्गान् (३) ॥ ३७ ॥

---

(१) अद्रगदिभिः तदवच्छिन्नं आत्मनः क्षेत्रं आदधीं ।

(२) तत्राकर्म्मविच्छन्तिच्छुः कूर्म्मचक्रेण क्षेत्रादीनां चतुर्णां नाम्नां नामाद्यरैक कोष्ट स्थित्यामैत्रीं अन्विष्य मण्डपं कुटीरं वाकुर्य्यादिति वच्यैत्यमेनान्वयः ।

(३) कादीन् सप्त लत्तमित्यष्टमोवर्गः ।

कचटतपयशाद्यां (१) ब्रह्मचमित्येक मीशे (२)
पुन रपि च पुरोवम्म ञ्यकोष्ठं विभज्य (३)।
स्वरगण मनुकोष्ठं युग्मशो न्यस्य तत्र
स्मरंतु तदिह (४) दीपस्थान मन्तः (५) पदैकं ॥ ३८ ॥
यत्र चेत्रादिनामाक्षर मचि हलि वा वीक्ष्यते तत्र वक्त्रं
कोष्ठाभ्यां चाप्युभाभ्यां करयुग मथ तत्पार्श्वयो श्चोभयत्र।
द्वाभ्यां कुक्षी उभाभ्यां पदयुग मनु तत्पुच्छमेकेन चक्रं
मन्त्रोत्थं कल्पयित्वा (६) सुरुचिर कमठाकार मष्टाङ्गपूर्णं ॥ ३९ ॥
मुखस्थितः सिद्धि मुपैत्यनाविलां दुनोत्युदासीनतया करस्थितः।
दुःखीभवत्यस्य हि कुक्षिसंस्थितः प्राप्नोति वन्धं विपदं पदस्थितः ॥४०॥
पुच्छस्थित स्तुच्छमतिः प्रणश्यति
तस्मान्मुखस्थो जप माचरेत् सदा।
तन्मध्यतो दीपपदस्थितोऽथवा
विना मुना नास्त्यभयेन मङ्गलं (७) ॥ ४१ ॥
चेत्रचेत्राधीशनामादिवर्णौ
यद्येकस्मिन् दृश्यते दुर्लभं तत्।
तस्मिन् मैत्री मन्त्रिणो मन्त्रतश्चेत्
का वा सिद्धि र्नास्ति तत्रैकवासात् ॥ ४२ ॥

---

(१) आदिवर्णेन तत्तद्वर्गपरिग्रहः। (२) ऐशान्ये लक्षमितिवर्णद्वयं।
(३) नवधाविभज्य इत्यर्थः। (४) इह स्वराद्य कोष्ठेषु।
(५) मध्ये। (६) फलं विद्यादिति शेषः।
(७) मुखस्थानंदीपस्थानं विना वा न्यत्र मङ्गलं नास्तीत्यर्थः।

पुण्यक्षेत्रे सिन्धुतोये नदादौ
शैलाग्रे वा न स्मरेत् कूर्म्मचक्रं ।
अन्येष्वेवंग्रामवास्त्वादिकेषु
ध्यायेत् केचिन्मान्त्रिकाः प्राहुरित्थं ॥ ४३ ॥
कूर्म्मचक्रमिद मुक्त मुत्तमं मन्त्रिणा मखिलसिद्धिसाधनं ।
यद्विविच्य विषयेषु भूभुजो मन्त्रिणश्च परमास्पदं विदुः ॥ ४४ ॥
यावत्क्षेत्रं कूर्म्मगात्रं तु तावज्ज्ञात्वा मध्ये तन्मुखव्यासभागे ।
कुर्य्याद्रम्यं मण्डपं वा कुटीरं प्राचीरं स्रक्सान्द्रचन्द्रातपाढ्यं ॥ ४५ ॥
न शीतवातातपतप्तमूर्त्ति र्जपं समर्थो भवतीत्यवश्यं ।
मनोनिरुद्वेगकृते कुटीरं चक्रुर्मुनीन्द्राः कृतिनो वनेऽपि ॥ ४६ ॥
इत्युक्तलक्षण मधिक्षिति गर्भलक्ष्य
क्षेत्रं च तत्र विकिरान् विकिरेत् सनीरान् ।
सिद्धार्थलाजभसिताक्षतदर्भदूर्वा-
गन्धादिका न्नरहरे र्मनुना (१) मनुज्ञः ॥ ४७ ॥
कृतप्रातःकर्म्मा परिहितशितस्पौतवसनो
मनोवाक्कायेषु च्युतचपलिमाचारनिरतः ।
समाचान्तः शान्तः कुशकनक-मुद्रायुतकरः
स्मरन्निष्टंदेवं (२) गणपति मथ स्वंगुरुगणं ॥ ४८ ॥
जपमण्डपपूर्वदिक्स्थितो मनुपञ्चाङ्गमयीं पुरस्क्रियां ।
प्रकरोमि यथोक्तसंख्यका मितिसंङ्कल्प्य जलं भुवि क्षिपेत् ॥ ४९ ॥

---

(१) आनुष्टुभेनाथर्व्वणेन वा नृसिंहमन्त्रेणेत्यर्थः ।

(२) इष्टदेवस्मरण मुखेन तत्पूजोक्ताावेदितव्या ।

पुरस्कर्म्म कर्त्तुं स्वयं चेदशक्तो
नियुञ्जीत तत्कर्म्मणि स्वानुकूलं (१)।
समर्प्यात्मसम्भार माचार्य्य मार्य्यं
तदन्तावधि स्यात् स्वयं चैकभक्त: ॥ ५० ॥
आचार्य्य मार्य्यचरितं पुरत: परीक्ष्य (२)
दीक्षाविशेषसमुपार्ज्जितमन्त्रवीर्य्यं ।
निर्य्यातमोह मपवर्ज्जितलोभचर्य्य
मर्य्यादया च दययाऽनुगतं सधैर्य्यं ॥ ५१ ॥
सकलागमसारकोविदं तं निखिलाचारविचार-चारुचित्तं ।
गुरुभक्तिविशेषशंसनीयंगरिमालंकृत मात्मचेष्टितेषु (३) ॥ ५२ ॥
तरुणं स्थितमाश्रमे द्वितीये (४)
करणानामपि दोषतो विमुक्तं (५)।
चरणाद्यखिलाङ्गसिद्धिशुद्धं
तरणाय क्षम मोहितैर्भवाब्धे: ॥ ५३ ॥
इत्याद्यनेकगुणशालिन मादरेण
सन्तोष्य गन्धकुसुमाम्बरडम्बरेण ।
विप्रं पुरश्चरणकर्म्मणि कर्म्मदक्ष-
मक्षुस्सपुण्यनिचयं विदधीत धीर: ॥ ५४ ॥

(१) न प्रतिकूलं । (२) कुर्य्यादितिशेष: ।
(३) स्वव्यापारेषु गौरवयुक्तं नत्तलघुमित्य: ।
(४) गृहस्थाश्रमेस्थितं ।
(५) यत्र आदौन्द्रियाणामपराधे रक्षितं ।

ततो जपगृहं विशेदशनभूषणाच्छादनै
द्विजांश्च परितोषयन् श्रुतिवचस्तदाशीर्युत: ।
गुरुं पुन रुपायनै र्बहुभि रर्चयन्नात्मना
समं सकल माहरन् यजनसाधनं साधक: ॥ ५५ ॥
तन्मध्ये हस्तमात्रोन्नतनिगमकरायामवेदास्रवेदीं (१)
निर्म्माय स्थण्डिलं चामलमृदुलमृदा हस्तमात्रं तदन्त: ।
कोणेष्वम्भ: पलाशांशुकफलकलितान् (२) पूर्ण कुम्भांश्च भूयो
दिक्षू द्दीप्तान् प्रदीपान् सुरभिघृतयुतान् (३) स्थापयेत् पूर्ववन्नान् ॥५६॥
पीठं तत्र (४) निधापयेत् पृथुतरं जम्ब्वाम्रनिम्बामलो-
कुम्भोदुम्बरचन्दनद्वय (५) मधु (६) श्रीपर्णिका (७) चम्पकै: ।
पुन्नागागुरुकण्टकिप्रभृतिभि र्वृक्षै र्मृतै:पातितै: (८)
शस्तै: प्राक्फलितै स्तथा सुरुचिरं सत्शिल्पिना निर्म्मितं ॥ ५७ ॥
चतुरङ्गुल मुच्छ्रयेण तन्निजहस्तद्वयमात्रविस्तरं ।
किमु हस्तमितं समं स्थिरं चतुरस्रं त्वथवा तिवर्त्तुलं ॥ ५८ ॥
तदुपर्य्यपि संस्तरे क्रमादजिनं सद्वसनं कुशत्रयं ।
नतु केवलकाष्ठ माश्रये ज्जपतां तत्कुरुते रुजं यत: ॥ ५८ ॥

---

(१) हस्तमात्रोन्नतां चतुर्हस्तायतां चतुरस्रां वेदीं ।
(२) जलपल्लववस्त्रफलसहितान् ।
(३) गोघृतयुक्तान् ।
(४) वेदिकायां ।
(५) चन्दनं रक्तचन्दनं ।
(६) मधुकं ।
(७) गम्भारी ।
(८) न तु स्वयमुत्पाटितच्छेदिते मित्यर्थ: ।

भूमि भूपतितो भयं वितनुते नीरं निरोजस्कतां
पत्रं चित्तपरिभ्रमं तृणमयं नित्यं समन्नाच्चयं ।
वंशो वंशविनाशनं दृषदतिव्याधिं समिद्दुर्गतिं
हार्दं दुःख मपीष्टकादिक मतो वर्ज्यानि चैतान्यलं ॥ ६० ॥
चर्म्म ग्राह्यं शर्म्मणे कर्म्मठानां सर्व्वाङ्गोत्थं पौंस्न (१) मच्छिद्रलोम ।
नस्त्रीव्रात्यादीच्चितारूढ़पूर्वं नोजीर्णं नाऽशस्त्रपूतं कदाचित् ॥ ६१ ॥
तत्र स्नानं गौरवं (२) रौरवं तु प्रायोदत्ते दान्तशान्तद्विजेभ्यः (३) ।
चाञ्चल्यं वै चेतसश्चारचय्य चित्रं मार्गं चण्डसिद्धिंविधत्ते ॥ ६२ ॥
तारत्तवं च्चिप्र मशेषकामान् शान्तिं प्रयच्छद्दिदुषां विपर्त्तिं ।
वैयग्रमुत्पादयदुग्रसिद्धिं शौघ्रं तु वैयाघ्र मपीह धत्ते ॥ ६३ ॥
स्तम्भनमोहनवश्योच्चाटनमारणविद्वेषण मितिषट्सु ।
कर्म्मसु चर्म्म द्विपवृकगण्डकमेषलुलापशिवाङ्गज मुक्तं ॥ ६४ ॥
गोचर्म्म शस्तं खलु शान्तिकर्म्मण्यन्येषु (४) तत्कल्पसमोरितं यत् ।
चर्म्मासनं किंतु मतं जपादौ नजातु पूजास्विति केचिदूचुः ॥ ६५ ॥
वस्त्रं प्रशस्तं हि सदासनाय
रूढ़ं नवीनं शुचिसान्द्रसूत्रं ।
कीटाखुदन्ताचत मात्मवित्तैरु-
पार्ज्जितं (५) कोमल मेव शुष्कं (६) ॥ ६६ ॥

---

(१) पुरुषसम्बन्धि । (२) रुरुमृगाजिनं ।
(३) एतव्यासनं ऐश्वर्यिकानामितिबोध्यं ।
(४) व्यभिचार प्रतिक्रियादौ । (५) न्यायतः क्रीतैः ।
(६) नत्वार्द्रं ।

कार्पासं तत्र वस्त्रं वसुवलसुखकृद्रोगसंघातहारि
क्षौमं क्षेमं विधत्ते विविधसुखसुहृद्भोगसंपत्तिकारि ।
कौषेयं दोषसंघं हरति वितनुते पुष्टिमिष्टां च भूयः
संसक्तं स्वर्णसूत्रै रिद मखिल मभीष्टार्थसिद्धिं ददाति ॥ ६७ ॥
राङ्कवं कम्बलं सर्वकामप्रदं धर्मवृद्धि-प्रदं मेषरोमोद्भवं ।
आविकं चार्थसिद्धिप्रदं मन्त्रिणां धर्म्मकामार्थ प्रदं चित्रितं ॥ ६८ ॥
पीतं पिङ्गं रक्त मापाटलाभं कृष्णं नीलं स्तम्भनादौ क्रमेण ।
वर्णं कुर्य्यात् शान्तिके शुक्लमेव प्रायः सर्व्वैश्चित्रितं सर्वकार्य्ये ॥ ६९ ॥
निपातनीया वितता स्तदासने
कुशा न ह्रस्वा न कृशा विपश्चिता ।
न च क्षताः शुद्धजलैः समुक्षिता
उदग्दिशि प्राग्दिशि वा कृताग्रजाः ॥ ७० ॥
अभावतः केवल मंशुकं शितं स्वहस्तमात्रं चतुरस्रमायतं ।
निपात्य दर्भवितयान्वितं क्षितौ वसेत्ततः स्वस्तिकपङ्कजादिना ॥७१॥
योगागमे चतुरशीतिविधासनानि
स्थैर्य्याय योगिवपुषः किलकीर्त्तितानि ।
तत्रैकविंशतिमितान्युपयोगवन्ति
मुख्यानि चेह कथयामि सलक्षणानि ॥ ७२ ॥
स्वस्तिकं तदनु पङ्कजासनं भद्र-संज्ञमथ वीरसंज्ञकं ।
कूर्मगोमुख-समेतकुक्कुटोत्तानकूर्मसहितं शवासनं ॥ ७३ ॥
सिंहासनं पश्चिमतानसंज्ञकं मायूरकं नारककार्मुके च ।
मत्स्यासनं भैरव मुक्तसिद्धवज्रासनं गारुड़दिव्यसंज्ञे ॥ ७४ ॥

एषांमध्ये स्वस्तिकं पद्मकं च
द्वेधा स्यातां ते च पूजासु शस्ते।
भद्रं द्वेधा वीरसंज्ञं त्रिधा स्या
त्सर्वाण्येतान्येव शस्तानि जाप्ये॥ ७५॥

अन्यानि योगाङ्गसमाधिकार्य्ये शस्तानि तानि प्रकृतप्रसङ्गात्।
उदीरितानीह वृथा कदाचिन्नस्यात्पदार्थप्रतिसंग्रहस्तु॥ ७६॥

अभ्यस्यादा वासनवन्धान् गुरुदिष्टान्
स्वल्पं स्वल्पं सिध्यति यावत्तदयत्नं।
यो यस्य स्यादासनवन्धः सुकरोऽसौ
यत्त स्तिष्ठेत् कर्म्मसु तस्मिन्नुपविश्य॥ ७७॥

विनासनं वर्ष्मणि वायुधारणा
न सम्भवेद्धारणया विना मनः।
न जीयतेऽथाजित चेतसः स्थिरं
न सिध्यति ध्यान मिदं विना जपः॥ ७८॥

असिद्धे जपे नो भवेदिष्टसिद्धिर्विनासिद्धितो कर्म्मजालं वृथास्यात्।
अतः सर्वकर्म्मस्वभीष्टार्थसिद्ध्यै नृणां मूल मेवासनं वेदितव्यं॥ ७९॥

युक्तासनो जयति तावदशेषरोगा-
नायु स्थिरं च भवतीह जितासनस्य।
तेनाखिलासननिवन्धनवोधनाय
वक्ष्यामि लक्षण मनुक्रम मागमोक्तं॥ ८०॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्वस्वे पुरश्चरणनिर्द्देशो नाम द्वादशः संग्रहः॥

## त्रयोदश संग्रहः ।

जानूरुयुग्मान्तरमध्यबद्धं (१) सम्यक्स्थितः पादतलद्वयं चेत् ।
स्थिरं वसेच्चेत् सरलीकृताङ्गः स्वयं तदा स्वस्तिक मासनं स्यात् ॥ १ ॥
वामदक्षिणपदाक्रमक्रमा (२) त्तद्विधा भवति, साधकोत्तमः ।
स्त्रीमनुं जपतु वामवन्धने दक्षिणे पुरुषदेवतामनुं ॥ २ ॥
वामोरूपरिदक्षिणं च चरणं संस्थाप्य वामं तथा
याम्योरूपरि पृष्ठसीमनि मिथोऽङ्गुष्ठौ कराभ्यां दृढं (३) ।
धृत्वा स्वे हृदये निधाय चिवुकं नासाग्र मालोकये
देतत्पङ्कज मासनं मुनिजनध्याने समाधौ मतं ॥ ३ ॥
तदेव उद्बन्धनसंस्थया स्थितं करोज्झिताङ्गुष्ठयुगं (४) भवेद्यदि ।
तदा जपार्च्चादिषु शस्यते पुन र्नचापरं विद्यत ईदृगासनं ॥ ४ ॥
मुष्काधस्ता द्गुल्फयुग्मं निधाय क्षिप्रा पादौ पार्श्वयो रेव तिर्य्यक् ।
निष्कम्पांगो भूमि माक्रम्य तिष्ठे देतच्चाऽध्कारि भद्रासनं स्यात् ॥५॥
तत्पादयुग्मं यदि पश्चिमाग्रं (५) कृत्वोपरिष्टा न्निवसे दकम्पः ।
तदेव गुप्तासन माहुरेके केचित् परंभद्र मुदीरयन्ति ॥ ६ ॥

---

(१) जान्वोरुर्वोश्चान्तरेऽवकाशे यन्मध्यं तत्रबद्धं ।

(२) वामपादं प्रथममाकुञ्च्य प्रथमं, दक्षिणपादं प्रथममाकुञ्च्य च द्वितीय-मित्यर्थः ।

(३) पृष्ठगताभ्यां कराभ्यां परस्परेण कराङ्गुष्ठौ धृत्वा इत्याशयः ।

(४) करद्वयत्यक्तं अङ्गुष्ठयुग्मं यस्मिन् तादृशं ।

(५) पृष्ठाभिमुखं ।

वामोरुमूलोपरि दक्षपादं निवेश्य दक्षोरुतलेन तेन।
आसीत वामं चरणं निपीड्य वीरासनं स्यादयितं सुराणां ॥ ७ ॥
वामे पादतले वरान् दृढ़ मथो तज्जानुनाऽग्रक्षितिं (१)
प्रत्याक्रम्य तथैव दक्षचरणं संकोच्य कौ शङ्कुवत् (२)।
तज्जानूपरि दक्षिणं भुज मथो संस्थापयित्वा वसे-
देतत् कान्तियशोबलर्द्धिसुखकृ द्दीरं मतं मानुषं ॥ ८ ॥
वामांघ्रे (३) रुपरि निवेश्य दक्षपादं
तज्जानूपरिनिहितात्मदक्षबाहुः।
वामे जानुनि च निपीड्य वामपाणिं
मासीत प्रियमिति वीर मासुराणां ॥ ९ ॥
एषु जयादिकृते प्रथमं (४) स्या न्मध्यम (५) मेत्र मतं पितृपिण्डे।
अन्तिम (६) मप्यशनादिषु शस्तं वीरमिदं त्रिविधं जगु रेके ॥ १० ॥
व्यतिक्रमेणा (७) थ मिथः स्वगुह्यं (८)
गुल्फद्वयेनाऽ तिदृढं निपीड्य।
जानुद्वयन्यस्तकरद्वयः सन्
वसे दिदं वै कमठासनं स्यात् ॥ ११ ॥
निवेश्य दक्षेतरपृष्ठपार्श्वे व्यतिक्रमा द्दक्षिणपादगुल्फं।
वामं तथा दक्षिणपार्श्वत श्चेत् स्याद्गोमुखं गोमुखव न्नतांसं (९) ॥१२॥

(१) अग्रभागं। (२) भुवि प्रोतकीलवत्। (३) वामपादतलस्य।
(४) दिव्यं। (५) मानुषं। (६) आसुरं।
(७) व्यत्ययेन। (८) गुदद्वारं।
(९) नतौ अंसौ यस्मिन् तादृशं।

पद्मासनस्थो विनिवेश्य हस्ता
वाकूर्परं (१) जानुयुगोरुमध्ये।
दोर्भ्यामवष्टभ्य भुवं नभस्थः
स्यादासनं कुक्कुटसंज्ञमेतत्॥ १३॥

कुक्कुटासनगतो भुवि तद्वत्
कन्धरां करयुगेन च बद्धा।
ऊर्द्ध्वदृक् शुचि शयीत (२) कुर्म्मो-
त्तानकूर्म्ममिदमुक्तमघघ्नं (३)॥ १४॥

उत्तानवक्त्रोऽविकलो हृदि संन्यस्तदोर्युगः।
शयीताऽऽयतपादाग्रः प्रोक्तमेतत् शवासनं॥ १५॥

मुष्कस्याधो दक्षिणे सव्यगुल्फं
सव्ये तद्वद्दक्षगुल्फं निवेश्य।
दत्वा हस्तौ जानुनो मुक्तशाखौ
व्यात्तास्य स्येत् सिंहसंज्ञासनं स्यात्॥ १६॥

प्रसार्य्य पादौ भुवि दण्डरूपौ (४)
दोर्भ्यां च पादद्वितयं (५) गृहीत्वा।
जानूपरि न्यस्तललाटदेशो
वसेदिदं पश्चिमतानमाहुः॥ १७॥

---

(१) कफोणिपर्य्यन्तं।

(२) ऊर्द्ध्वमुखःसन् शुद्धं यथातथा शयीत इत्यर्थः।

(३) व्यसनच्छेदि। (४) लम्बाकारौ। (५) पादतलद्वयं।

धरा मवष्टभ्य दृढं कराभ्यां
कफोणियुग्मार्पितनाभिदेशः ।
उत्क्षिप्य (१) पादौ दिवि चोन्नतांस
स्तिष्ठे न्मयूरासन मेतदुक्तं ॥ १८ ॥
निधाय भूमौ स्वशिरः सुनिश्चलं
सकूर्परं (२) पाणियुगं निपात्य ।
पदद्वयं खे (३) विनिधाय दण्डवत्
स्थिरीभवे त्तत्रकासनं मतं ॥ १८ ॥
याम्योरूपर्य्युपेतं निविड़तर मथो वामपादं च दोष्णा
वामेनादाय पश्चात्तदितरचरणं दक्षहस्तेन नम्र (४) ।
धृत्वा दक्षे कफोणौ सपदि तदितरज्जानु तिर्य्यङ्निहत्य
स्थीयेत स्थैर्य्यशौण्डो भवति किल धनुःसंज्ञ मित्यासनं तु ॥ २० ॥
वामोरुमूलार्पितदक्षपादं जान्वो र्वहिर्वेष्टितदक्षदोष्णा (५) ।
प्रगृह्य तिष्ठन् परिवर्त्तिताङ्गः स्यान्मत्स्यनामोदित मासनं तत् ॥२१॥
स्थित्वैकपादेन तदूरुमध्ये दत्वेतरं (६) पादतलं निरीहः ।
वक्षोऽन्तरे पाणियुगं निबध्य तिष्ठेदिदं भैरवमासनं स्यात् ॥ २२ ॥
भैरवासननिबन्धनस्थितोऽङ्गुष्ठमूलपरिपीड़ितक्षितिः ।
ऊर्द्ध्ववाहुयुगलोऽवतिष्ठते चेत्तदा भवति मुक्त (७) मासनं ॥ २३ ॥

---

(१) भून्येपादावुत्क्षिप्य । (२) कराग्रात् कूर्पर पर्य्यन्तं ।
(३) शून्ये । (४) प्रसारितं ।
(५) दक्ष हस्तेन जानुद्वय मावेष्ट्य दक्षपादं च उत्तानं गृहीत्वा ।
(६) येन पादेन तिष्ठेत् तदूरुमध्ये ऽपर पादतलं दत्वा ।
(७) मुक्ताख्यमासन मित्यर्थः ।

समं पदाभ्यां भुवि संस्थितःसन्
निष्कम्पसर्वावयवः कराभ्यां ।
कट्यो निधायो (१) र्द्ध्वमुखः प्रतिष्ठेत्
सिद्धासनं प्राहु रिदं हि सिद्धाः ॥ २४ ॥
आस्थाय मेढ्रोपरि (२) सव्यगुल्फं
गुल्फान्तरं तत्र निधाय (३) तिष्ठेत् ।
वज्रासनं प्राहु रिदं मनुज्ञाः
सिद्धं च मुक्तं खलु केऽपि गुप्तं (४) ॥ २५ ॥
स्थित्वा वामपदाङ्गुलीभि रवनौ तत् पार्ष्णिमूले (५) गुदं
विन्यस्यैव वसेदसव्यचरणं संकोच्य कौ शङ्कुवत् ।
ऋज्वङ्गो हृदिबद्धहस्तयुगलः पश्येद्भ्रुवो रन्तरं
ज्ञेयं गारुड़ मासनं विषहरं मन्दाग्निदोषापहं ॥ २६ ॥
निपात्य जानुद्वय मेकसंहतं (६) तलद्वये तस्य परस्पराहते (७) ।
स्थिरं वसेदूरुयुगे करद्वयं निवेश्य दिव्यासन मेतदीरितं ॥ २७ ॥
आस्थायैषा मेक मप्यासनानां निष्कम्पाङ्गः प्राङ्मुखो वोत्तरास्यः ।
स्थित्वा पात्राण्यात्मनोऽग्रे जघाङ्गद्र्योपेतान्यासयेद्वा नुपूर्वं ॥ २८ ॥
जलं कुशान् वा कठिनीं स्वमालां गन्धं प्रसूनं जलगण्डुकं च ।
कृत्वैकपंक्तिं करमार्ज्जनाय स्वदक्षिणे पात्र मथासयेच्च ॥ २९ ॥

---

(१) करद्वयं कटिद्वयेनिवेश्ये त्यर्थः । (२) लिङ्गोपरि ।
(३) दक्षिणगुल्फं च तदुपरि दत्त्वा इत्यर्थः ।
(४) केचित्सिद्धासनं केचिन्मुक्तासनं केचिच्चगुप्तासनमाहुरित्यर्थः ।
(५) वामपार्ष्णिमूले तदुपरिपार्ष्णौ इत्यर्थः ।
(६) एकत्रलग्नं । (७) पादद्वयस्य जङ्घमुखे तले वसेदित्यन्वयः ।

तदग्रतो वस्त्रसमावृतक्षितौ (१)
निधापये द्भाजन मौपचारिकं (२) ।
यष्टुं स्वमिष्टं सुर मष्टयुग्मितं
द्विपञ्चकं पञ्चक मेककं (३) च वा ॥ ३० ॥
एक: पुमानुत्तरसाधक: (४) स्यात्
छेत्ताऽऽपदां (५) संस्कृतवाक्यवेत्ता ।
मात्सर्य्यहीनो धृतिधर्म्मशील:
शुश्रूषु रस्यानलस: शुचिश्च (६) ॥ ३१ ॥
अन्यो न प्रविशेत्तत्र प्रविष्टो न बहिर्व्रजेत् ।
तत्समीपे वृथालापग्राम्यगीतादिकं त्यजेत् ॥ ३२ ॥
माला हि मूलं जपसाधनं मतं
विनाऽनया च चरति यतो जप: ।
वच्ये ततोऽस्या: फलसंस्क्रियादिकं
स्वस्वानुकल्पोक्तविधानवर्त्मना (७) ॥ ३३ ॥
गणित्रिकागणनिकागणिकामालिकास्रज: ।
इतिनामानि यस्या:स्यु स्तन्निर्णय मथो ब्रुवे ॥ ३४ ॥
धातुरत्नफलदारुकीकसैर्निर्मिता भवति सापि पञ्चधा ।
धातुजा रजतकाञ्चनोत्थिता स्फाटिकादिदशधा हि रत्नजा ॥ ३५ ॥

---

(१) वस्त्रावृतभूतले । (२) उपयोग्य पात्राणि ।
(३) षोड़श दश पञ्चकमष्टौ एककं पुष्पपात्रकित्यर्थ: ।
(४) सिद्धिसाधनेसहाय: । (५) उपस्थितोपद्रवनिवारक: ।
(६) निष्कपट: । (७) स्वं स्वं मन्त्रमुद्दिश्य कल्पोक्त मार्गेण ।

साऽर्काश्मप्रभवा प्रवालरचिता सत्पुष्परागोद्भवा
नैली मारकती विदूरमणिजा गोमेदजा हैरकी ।
माणिक्यै रचिताऽथ मौक्तिकमयी श्वेता: क्रमेणोत्तरा: (१)
कथ्यन्ते फलजा:स्रज: परिणते (२) या:स्यु:फलैर्निर्मिता: ॥ ३६ ॥
पूतञ्जीवेन्द्रभद्राक्षपद्माक्षै
रुद्राक्षैर्निर्मिता: पञ्चधा ता: ।
इंधाऽक्षाक्षी तत्र शुक्ला च रक्ता
रौद्राक्षी स्यादनेकधा वक्त्रयोगात् (३) ॥ ३७ ॥
तत्रैकवक्त्र:शिव एव साक्षात्
स्यात्पूर्णग: स्तम्भयतोरु:पार्क ।
याति प्रतिस्रोत उद: प्रवाहे (४)
करोति नृणा मतुलां समृद्धिं ॥ ३८ ॥
एकादशप्रभृतिषोडशसंख्यवक्त्र-
पर्य्यन्त मुत्तमतया षड़िमे दुरापा: ।
वेदत्रिपञ्चवदना: सुलभा स्ततोऽन्ये
शेषा:षड़ेव विभवव्यवसायलभ्या: ॥ ३९ ॥
मालां कुर्य्या त्तुल्यवक्त्रै:शिवाक्षै-
र्यावल्लभ्य: सा जपेषु प्रशस्ता ।
नो मालायां मिश्रयेद्भिन्नवक्त्रान्-
भिन्नास्या स्ते धारणे वा विधेया ॥ ४० ॥

---

(१) क्रमेणोत्तरोत्तरा : । (२) पक्वै: ।
(३) मुखरेखायोगात् । (४) निम्नप्रवाहिण्यपि जल पूरे माधोगच्छति ।

चन्दनेन च कुचन्दनेन वा
शुद्धवृद्धतुलसीन्धनेन वा ।
दारुजा भवति मालिका त्रिधा
हस्तिदन्तदरजा (१) द्विधाऽस्थिजा ॥ ४१ ॥
फलानि चात्र स्युः रुक्तविमानि तस्मात्तदस्त्वेव हि तत्प्रमाणं ।
याः कृत्रिमा स्तद्गुटिका विधेयाः सुपक्वधात्रीवदरास्थितुल्याः ॥ ४२ ॥
अस्थितो भवतिधातुजाऽधिका स्यात्ततोऽधिकफला हि रत्नजा ।
रत्नतोऽधिकफला हि दारवी सर्वतोऽधिकफला फलोद्भवा ॥ ४३ ॥
फलानां या पञ्चधा जाति रुक्ता तस्यां या या मालिकोक्ता क्रमेण ।
जप्तुः सा सा युज्यतेऽभीष्टसिद्ध्यै लाभेनैकैकं (२) सहस्रोत्तरेण ॥४४॥
सौवर्णी नीलजन्या मरकतजनिता स्तम्भने सुप्रशस्ता
रौप्योत्था पौष्परागी मलयजतरुजा मोहने चाथ वश्ये ।
प्रावाली चन्दनोत्था ऽरुणकमलभवा पद्मरागी च माला
पूतञ्जीवारुणाञ्जाक्षफलविरचितोच्चाटने संविधेया ॥ ४५ ॥
विद्वेषे गोमेदवैदूर्य्यमाला शस्ता चाथो मारणे लोहितोत्था (३) ।
भद्राक्षेन्द्राक्षैरुपेताऽत्र केचित् कुर्य्युः दन्तैः मालिकां रासभादेः ॥४६॥
रुद्राक्षमुक्तासितपङ्कजाक्षमाला च माला तुलसीभवा च ।
मुक्तिप्रदाः स्युः पुनरेव शस्ताः समस्तकर्मस्वपि ता स्वतन्त्राः ॥ ४७ ॥
पूतञ्जीवैः पुत्रकामस्तु कुर्य्यात् मालां लक्ष्मींलब्धुकामोऽम्बुजाक्षैः ।
भद्रेन्द्राक्षै रुद्रकाम स्तु कुर्य्यादित्थं केचित् प्राहु राचारविज्ञाः ॥ ४८ ॥

---

(१) हस्तिदन्तजा मज्जाजाचेति अस्थिजाद्विधेत्यर्थः ।
(२) एकैकं सहस्राधिकेन लाभेन फलेन वायुज्यते । (३) रक्तचन्दन जनिता ।

पौष्टिके सकलशान्तिकर्म्मणि
स्फाटिकी भवति हैरकीति च ।
नानयो रुपरि काम्यकर्म्मसु
क्वापि (१) शास्त्र उदिताऽस्ति मालिका ॥ ४८ ॥

साधारण्यः किलैता मनुषु निगदिता स्तान्त्रिकाणां गणितरी
वक्ष्येऽथासां विशेषं पृथगिह मनुजा ये यथा वा जपेयुः ।
रौद्राक्षी च शाम्भवानां सुखयति च विना वैष्णवं चेतरेषां
शाक्तादीनां त्रयाणामिय मपिच तथा स्फाटिकी (२) सौख्यदात्री ॥५०॥

श्वेताम्भोजाक्षमाला तदुपरि (३) तुलसीसम्भवा वैष्णवानां
तद्वद्वैनायकानां द्विरदरदमयी स्फाटिकी सूर्य्यभाजां (४) ।
शाक्तानां शोणितोत्था (५) विविधमणिमयी चापि शस्ताऽथ तत्तत्
कल्पोक्ता यस्य या स्यात् सतु जपतु तया मालयाऽभीष्टसिद्धैर ॥ ५१ ॥

मणिभि र्दशपञ्चभि रुद्गुथिताऽ
रिविरोधकृती (६) विहिता हि सदा ।
अथ विंशति रेकयुता (७) मणयोऽ
खिलशान्तिविधौ विहिता ग्रथने ॥ ५२ ॥

---

(१) शान्तिपौष्टिक व्यतिरिक्ते क्वापि काम्यकर्म्मणि स्फाटिकीहैरक्योर्न शास्त्रतोविनियोगइत्यर्थः ।

(२) यथा रौद्राक्षी तथा स्फाटिकी सुखदात्रीत्यर्थः ।

(३) तदुपरि—ततोऽधिकेत्यर्थः ।

(४) सूर्य्यंभजन्तीति सूर्य्य भाजस्तेषां सौराणामित्यर्थः ।

(५) रक्तचन्दनजा ।

(६) शत्रुविद्वेषकर्म्मणि ।

(७) एकविंशतिगुटिकाः ।

मुक्तये भवति पञ्चविंशतिः सप्तविंशति रशेषपुष्टये ।
त्रिंशदक्षगजवित्तवृद्धये सर्वसिद्धिविधयेऽक्षमालिका (१) ॥ ५३ ॥

आदिक्षान्तैरेकपञ्चाशवर्णै (२)
र्मैर्वन्तानां सम्मितानां मणीनां ।
या माला स्यादक्षमाला मता सा
किं वक्तव्यं स्पर्शतः पुण्यदात्री ॥ ५४ ॥

पञ्चाशच्चतुरधिका यदाऽक्षमाला
सा लाभं जनयति सिद्धिसंचयानां ।
ऐश्वर्य्यं जनयति पौष्टिके सदेष्टं
विंशत्या यदि खलु सप्तयुक्तया (३) वा ॥ ५५ ॥

पञ्चाशता वाथ शतेन माला
जपे तु साधारणसंप्रणीते ।
अष्टोत्तरेणाथ शतेन माला
सर्वार्थसिद्धौ विहिता विधिज्ञैः ॥ ५६ ॥

इतो (४) ऽधिका स्या न्न कदापि माला
न्यूना नचातः (५) कथिता मनुज्ञैः ।
आसा मलाभे नवदर्भकॢप्तां
मालां विशाला मनुनिर्मिमीत ॥ ५७ ॥

(१) पञ्चाशद्गुटिकामाला अक्षमाला प्रकीर्त्तिता ।
(२) अकारादिक्षकारान्तैः तत्रमेरुःक्षकारः ।
(३) सप्तविंशत्याक्तता । (४) अष्टोत्तरशतसंख्यातः नाधिका इत्यर्थः ।
(५) सप्तविंशतिसंख्यातः नापिन्यूनाइत्यर्थः ।

आर्द्रैः कुशै स्त्रिगुणितै प्रविधाय रज्जुं
सूक्ष्मां समां त्रिगुणितां पुनरेव तत्र।
कर्म्मानुरूपपृथगीरितसंख्ययैव (१)
ग्रन्थीन् प्रदक्षिणतया त्रिवृता करोतु ॥ ५८ ॥
अथ करमाला मिह कथयामि
प्रथिततमाऽथागमनिगमेषु।
जप मथ नैमित्तिक मपि नित्यं
नर इह (२) कुर्य्यात् सपदि ययैव (३) ॥ ५९ ॥
अङ्गुलयः पुनरङ्गुलिरेखा
अङ्गुलिपर्व्वदलान्यपि चेत्थं।
तिस्र उशंति (४) बुधाः करमाला
स्ताः पुन रष्टगुणोत्तरमुख्याः (५) ॥ ६० ॥
यद्यङ्गुलिष्वथ जपेत् स्वकनिष्ठिकादि-
ष्वेकैकशोऽङ्गुलिचयं प्रथमाङ्गुलान्तं।
संकोचयेत् (६) क्रमतउत्क्रमतश्च पश्चा-
दङ्गुष्ठतो विकचयेत् (७) स्वकनिष्ठिकान्तं ॥ ६१ ॥

---

(१) यस्मिन् कर्म्मणि यावत्यो गुटिका विहिता दर्भपक्षेऽपि तावन्तो ग्रन्थयो बोद्धव्याः।

(२) कर्म्मसु। (३) करमालयैव।

(४) इच्छन्ति।

(५) प्रत्येकमष्टगुणाधिक फलदा इत्यर्थः।

(६) कुञ्चीकुर्य्यात्। (७) प्रकाशयेत् विस्तारयेदितियावत्।

तस्यां जपः स्या द्दशकृत्वएव (१) संकुचितमुक्ताङ्गुलिमालिकायां (२) ।
गृह्लन्नवासौ सुकृतं करेण मुञ्चन्नवा विघ्नमुपैति सिद्धिं (३) ॥ ६२ ॥

अनामान्तः पर्व्वप्रभृति सकनिष्ठाङ्गुलिगताः
प्रदेशिन्यामूलावधि निखिलरेखा (४) विगणयन् ।
त्यजन्मध्यामूले तदुपरि च रेखाद्वय मिदं
धिया कृत्वा मेरुं जपतु दशरेखासु दशधा ॥ ६३ ॥

अनामिकामध्यमपर्व्वणः (५) क्रमात् कनीयसीमूलतआप्रवर्त्तयेत् ।
प्रदेशिनीमूलदलान्त मन्तरा जपेत्तथाङ्गुष्ठमुखेन पर्वसु ॥ ६४ ॥

कनीयस्यनामाप्रदेशिन्य आसां
त्रिपर्वाणि चैकं परु मध्यमायाः ।
इयं पर्व्वमाला मता पंक्तिपर्व्वा
सुमेरु मतं मध्यमापर्व्वयुग्मं (६) ॥ ६५ ॥

---

(१) दशवारमेव ।

(२) संकुचिताः मुक्ताः प्रसारिताश्चाङ्गुलयो यस्यां तादृश्यां ।

(३) अङ्गुलिसङ्कोचेन सुकृतं गृह्लन् तत्प्रसारणेन च विघ्नं परित्यजन् जापकः सिद्धिं समुपैति । अत्रच "मुञ्चन्नवाघं समुपैतिसिद्धिं इति ग) पुस्तकस्थः पाठः समीचीनः ।"

(४) अनामामध्यपर्व्वण आरभ्य कनिष्ठादिक्रम गत्या तर्जनी मूलपर्य्यन्तं दशरेखा विगणय्य रेखामालया जपः कार्य्यः । तत्र च मध्यामूलपर्व्वद्वयाधस्तन-रेखाद्वयं बुद्ध्या मेरुं प्रकल्पयेदित्याशयः ।

(५) पर्व्वमालामाह ।

(६) कनिष्ठानामिकातर्ज्जनीनां त्रीणित्रीणि पर्व्वाणि, मध्यमायाश्चैकं पर्व्व मिलित्वा दशपर्व्वा पर्व्वमाला । तत्र च मध्यमाया अवशिष्टं पर्व्वद्वयं मेरुं कल्पयेत् इत्याशयः ।

जपेदनामाङ्गुलिमूलपर्व्वतः (१) स्वमध्यमामूलदलान्त मादरात् ।
दशस्वथो पर्व्वसु मध्ययोर्द्वयोः परुर्द्वयं मेरु रीतीह केचन ॥ ६६ ॥
कनीयसीमूलदलात् (२) क्रमेण च प्रदेशिनीमूलदलान्तमष्टसु ।
जपेत्तथा पर्वसु यत्रयत्र वा विधीयते मन्त्रिभि रष्टधा जपः ॥ ६७ ॥
पर्व्वसन्धिषु सुमेरुलङ्घने यो जपोऽङ्गुलि-शिरस्सु साध्यते ।
सोऽखिलो भवति हन्त निष्फलः केचिदूचु रिति (३) तन्त्रकोविदाः ॥६८
गणिविकाणां कथितोऽत्र निर्णयो विधीयते तद्ग्रथनाविधिःपुनः ।
सितं हि सूत्रं हित मत्र पूर्व्ववद्वशेऽभिचारेष्वरुणं च मेचकं (४) ॥६९॥
वक्ष्ये दीक्षाक्षमालाग्रथनविधि मथो (५) प्राश्य पूर्व्वैकभक्तम्
प्रातर्नित्यक्रियान्ते सममहितनवं (६) संविधायाक्षवृन्दं ।
नेनिज्यात् पञ्चगव्यै रथ विमलजलैः क्षालयेन्मुक्तारूपं (७)
सूत्रं वा पट्टसूत्रं विरचित मथवा शोधयेत् स्वर्णसूत्रं ॥ ७० ॥

---

(१) प्रकारान्तरेण पर्व्वमालामाह—

अनामिकामूलपर्व्वण आरभ्य कनिष्ठादितर्जनीं समादाय मध्यामूल पर्व्वान्तं दशभिः पर्व्वभिर्व्वा पर्व्वमालां कल्पयेत् । तत्र च मध्यगतं परुर्द्वयं ( मध्याया एकमनामायश्चैकं ) मेरुं भावयेदित्याशयः ।

(२) यत्र यत्र संस्कारादौ अष्टधा जपो विहित स्तत्र इयमष्टपर्व्वा पर्व्वमाला प्रयोज्ये त्याशयः ।

(३) पर्व्वसन्धिषु यज्जप्तं यज्जप्तं मेरुलङ्घने इत्यादीत्यर्थः ।

(४) रक्तं कृष्णं च । (५) पूर्व्वदिने एकवारं भोजनं कृत्वेत्यर्थः ।

(६) समं महितं ( पूजितं ) नवं ( नूतनं ) चेत्यर्थः अत्र च सम मक्षत मवनिति (ग) पुस्तके पाठः । तत्र च अक्षतमक्षतमित्यर्थः ।

(७) मुक्तादि रूपं ।

चलदलदलैः पद्मं कृत्वाऽष्टपत्रसकर्णिकं (१)
तदुपरि मणीन् सूत्रं गङ्गाम्बुना परिलोड़येत् ।
मणिषु च तथा तन्त्री तारं सशक्तिकमातृकां (२)
सपदि विधिवन्न्यस्येदर्घं ततो मनुना (३) चरेत् ॥ ७१ ॥

शक्तितोऽथ विहिते (४) स सर्पिषां
संजुहोतु मणिसंख्ययाऽनले ।
आचरेत् सपदि होतु मत्तमो
होमतो द्विगुण मादृतो (५) जपं ॥ ७२ ॥

पुच्छे पुच्छं वक्त्रदेशे च वक्त्रं
संयोज्यातः कल्पिताकाररीत्या (६) ।
संग्रथ्नीयादेकमेकं मणीनां
प्राचीवक्त्रः संस्मरन्मूलमन्त्रं ॥ ७३ ॥

गोपुच्छाभा भोगिभोगाकृति र्वा
माला कार्य्या शङ्खपाशाकृतिर्व्वा (७) ।
ब्रह्मग्रन्थिं दक्षिणावर्त्तरीत्या
मध्ये मध्ये संयतं (८) संदधीत ॥ ७३ ॥

---

(१) अष्टभिः पत्राणि एकेन च कर्णिकामित्यर्थः ।
(२) प्रणवशक्तियुक्तान् मातृकावर्णान् ।
(३) मूलेन । (४) विहितेरित्यस्यानल इत्यग्रिमेणान्वयः ।
(५) सादरं । (६) मनसि कल्पितो य आकार स्तद्रीत्येत्यर्थः ।
(७) शंखाकृतिर्व्वा पाशाकृतिर्व्वेत्यर्थः ।
(८) सम्यक् बद्धं यथातथा ।

निष्कामे तु ग्रन्थिहीनैव कार्य्याः
पाशीभाजा (१) मेरुणैकेन सक्ता ।
मेरु मूले वर्त्तुलः स्याद्दलोर्द्ध
छत्राकारः कृत्रिमा मालिका चेत् (२) ॥ ७५ ॥
पाशाकारा तुल्यमूलाग्रभागा (३)
शङ्खाकाराऽन्तेकृशा मध्यपीना ।
गोपुच्छाभा किंचिदूनाग्रभागा
सर्पाकाराऽतीव कार्य्या कृशाग्रा ॥ ७६ ॥
केचित्प्राहुः स्तम्भने पौष्टिके च-
श्रेयः कृत्ये मारणे ताः क्रमेण ।
शस्ता अन्त्या शोभने (४) नैव शस्ता
हस्ताग्रस्था शस्यते के भुजङ्गी ॥ ७७ ॥
मेरुं कृत्वा चकारं सविधुशकलया (५) मालया वर्णमय्या—
संसज्या थ क्रमव्युत्क्रमपरिगतया साष्टवर्ग्या (६) जपेद् यः ।
सिद्धिस्तस्याविदूरे (७) दुरितकुलसमुन्मूलनो (८) मूलहेतु
श्चिन्ता किंतावदर्थेष्वपि फलनिचयेऽप्यस्य मन्त्रीश्वरस्य ॥ ७८ ॥

---

(१) पाशीं शेषसूत्रद्वय ग्रन्थिं भजतीति तेन ।

(२) अकृत्रिमायां तु फलरुद्राक्षादि जप्यमालायां नेदृशोमेरुः किन्तु सदीयेन एकेन इत्याशयः । (३) सर्व्वांशसमा ।

(४) अन्त्या सर्पाकारा शुभकर्म्मणिनैवशस्ता इति योजना ।

(५) चन्द्रखण्डयुक्तया । (६) अष्टवर्गमय्या । (७) हस्तेदूरे ।

(८) अत्र "दुरितकुलसमुन्मूलने मूलहेतु" रिति पाठो (ख) पुस्तके, सतु-समीचीनः ।

इत्यक्षमालाग्रथनं मयोक्तं पथाऽमुनाऽनूह्य मथापरासां (१) ।
छिन्नेऽथ सूत्रे पुनरेव मासां तथैव सूत्रे ग्रथनं विधेयं ॥ ७९ ॥
वक्ष्यामि तासां प्रथमप्रतिष्ठामितोऽपरस्मिन्निह संग्रहादौ ।
संपत्स्यते पञ्चभि रीशमन्त्रैर्हंसादिकै वा (२) प्रणवांशमन्त्रैः ॥ ८० ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्वस्वे मालानिर्णयो नाम त्रयोदशः संग्रहः ॥ * ॥

## चतुर्दशः संग्रहः ।

केचिन्मालां शेषरूपां स्मरन्ति
संस्कार्य्याऽसौ तन्मते शैवमन्त्रैः ।
ताराकारां केचिदन्तर्भजन्ते
संस्कुर्य्यात्तां तन्मते प्राणवग्भिः (३) ॥ १ ॥
नव्ये गव्यैः पञ्चभि र्मालिकां स्वां
सद्योजातेना (४) भितः क्षालयित्वा ।
श्रीखण्डाद्यै (५) र्घर्षये द्गन्धसारै
र्मन्त्रेणासौ वामदेवेन भूयः (६) ॥ २ ॥

---

(१) अक्षमालाग्रथनमुक्तं अनयाचदिशा तद्विविधमालानां ग्रथनं अनूह्यं तर्कणीयं इत्यर्थः ।

(२) अयं च व्यवस्थितो विकल्पः वैष्णवानां हंसादि पञ्चकेन इतरेषां तु रुद्रपञ्चकेनेत्यभिप्रायः ।

(३) प्रणवस्य सम्बन्धिभिः पञ्चभीरृग्भिः ।

(४) सद्योजातं प्रपद्येहमित्यादिना ।

(५) चन्दनाद्यैः । (६) ओं वामदेवाय नमः, इत्यादि मन्त्रेण ।

भद्रासने नूतनवस्त्रसंस्तृते निधाय तां तावदघोरमन्त्रतः (१) ।
निवेदयेद्धूप मथागुरूत्थितं विलेपयेत्तत्पुरुषेण (२) तां पुनः ॥ ३ ॥
ईशानमन्त्रेण (३) च मन्त्रयेत्तां
मालां स्पृशं स्तं (४) शतवार मुक्त्वा ।
प्राणान् प्रतिष्ठाप्य यथावदस्याः
प्रदर्शयेत्तत्पुरतोऽष्टमुद्राः ॥ ४ ॥
धेनुमुद्रा मथो ज्ञानमुद्रां ततश्चक्रमुद्रां पुनर्लिङ्गमुद्रामपि ।
पद्ममुद्रां स्मरागारमुद्रां (५) पराशङ्खमुद्रां च निर्वाणमुद्रामिमाः ॥ ५ ॥
एताः केचिद्दर्शयन्ते जपान्ते
संतोषार्थं मन्त्रतद्देवतायाः (६) ।
मुद्राःसर्व्वा देवतामोददात्र्य
स्तस्मान्मुद्रा मन्त्रवद्गोपनीयाः (७) ॥ ६ ॥
ध्यायेन्मालां शेषरूपां सुशुक्लां
सूक्ष्माकारां वक्त्रसंवेष्टपुच्छां (८) ।
मेरुं धृत्वा मूल मुच्चार्य्य पूर्व्वं
विन्दूपेतां (९) संजपे न्मातृकां च ॥ ७ ॥

---

(१) ओं अघोरेभ्योऽथघोरेभ्यं इत्यादिना ।

(२) ओं तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नोरुद्रः प्रचोदयादिति मन्त्रेण । (३) ओं ईशानः सर्व्वविद्यानमीश्वर इत्यादि मनुना ।

(४) ईशान मन्त्रं । (५) योनिमुद्रां ।

(६) मन्त्रस्य तदधिष्ठातृ देवतायाश्च, सन्तोषार्थमिति पूर्व्वेणान्वयः ।

(७) मुद्रां मालां च मन्त्रं च पशुभ्यो न प्रकाशयेदिति शास्त्रादित्याशयः ।

(८) स्वमुखान्तर्गतं पुच्छं यस्यास्तां । (९) सानुस्वारां ।

सर्व्वमन्त्रजननी हि मातृका या तया भवति साधु संस्कृता।
पूर्व्वमन्त्रजपकर्म्मसूत्तमा सा मता गणनिकाऽखिलार्थदा॥ ८॥
अथवा शिवमन्त्रपञ्चकै (१) विनियुञ्जीत स हंसपञ्चकं।
सकलं विदधीत पूर्व्ववत् प्रणवात्मान मिमां विभावयेत्॥ ९॥
हंसः (२) प्रतविष्णुरितिक्रमेण त्रैयम्बकं तत्पदपूर्वविष्णोः।
स विष्णुयोनीति मता हि मन्त्राः पञ्चैव, पञ्चप्रणवांशजाताः॥ १०॥
एभि र्माला वैष्णवैः संस्कृता स्यात् शैवादीनां पूर्व्वमन्त्रै र्यथावत्।
इत्थं प्राहुः केचिदार्य्या उभाभ्यां शुद्धा माला जप्तुमर्हा भवन्ति॥ ११॥
संस्कुर्व्वते केचिदिमां ध्रुवेण (३)
ह्रल्लेखया (४) केचन जप्यमालां।
इष्टाणुना (५) केचिदभीष्टसिद्ध्यै
समाश्रये द्देकतमं तदेषां॥ १२॥
स्वयं च मालाग्रथिताऽऽत्म घृष्टं
न धार्य्यते चन्दन मित्यनेन।
निषिध्यते चन्दनसंनिधानात्
सा यात्र पुष्पस्य, न चाक्षमाला (६)॥ १३॥

---

(१) पञ्चरुद्रमन्त्रैः। (२) हंसादिपञ्चकमाह—
(३) प्रणवेन। (४) भुवनेश्वर्य्या। (५) इष्टमन्त्रेण।
(६) स्वयं च ग्रथितामाला आत्मघृष्टं च चन्दनं। न धारणीयमित्यादि निषेधेन चन्दन सन्निधानात् पुष्पमालायाएव मालापदेन विषयीकरणात् प्रकृतेऽक्षमालाविषयत्वं तस्य दूरपराहतमिति भावः।

संस्कृत्य मालां गुरुहस्तपद्मा ङ्गुरो रभावे निजदेवतातः ।
ततो गृहीत्वेतरतोऽतियत्नात् संगोपयेत् स्पर्शनदर्शनाभ्यां (१) ॥१४॥
संस्कृत्य मालां शितवुद्धि रित्थं तथैव विद्यामपि संस्करोतु ।
संसेवितापोषदसंस्कृता साऽप्रतिष्ठितार्च्चेव फलाय नेष्टे (२) ॥ १५ ॥
जनन मिह पुरोऽथ जीवनं च
प्रतिलिपि ताड़नवोधनाभिषेकाः (३) ।
तदनु च विमलीकृति स्तथाप्या-
यन मथ तर्पणदीपने च गुप्तिः ॥ १६ ॥
संस्कारा दशधा पृथङ्निगदिता स्तत्रादिमः कथ्यते
पत्रे स्वर्णशलाकयाऽथ विलिखेत् स्वर्णादिजे (४) मातृकाः ।
श्रीखण्डै रथ वैष्णव श्च भसितैः शैव स्तथा शाक्तिकः
काश्मीरै (५) रथ गाणपो मृगमदैः सौरोऽप्यसृक्चन्दनैः (६) ॥१७॥
तस्या (७) अक्षरपंक्तितोःमनुलिपी (८) रुद्राथ्य पत्रे लिखे-
दित्याहु र्जननं मनो र्मनुविदः कुर्य्यात्ततो जीवनं ।
मन्त्रार्णान् प्रणवद्वयान्तरगतान् कृत्वा सविन्दून् जपे
त्तन्मत्राक्षरसंख्यया निगदितं धीरै रिदं जीवनम् ॥ १८ ॥

---

(१) इतरेषां दर्शनात् स्पर्शनाच्च गोपयेत् इत्यर्थः ।

(२) यथाऽप्रतिष्ठिता प्रतिमा संसेविताऽपिफलदानेऽसमर्था । तद्वत् संस्कारा भाववती विद्याऽपीति भावः ।

(३) प्रत्यक्षरं ताड़न बोधनाभिषेका इत्यन्वयः ।

(४) स्वर्णादिजे इत्यस्य पात्रे इतिपूर्व्वेणान्वयः । आदि पदेन रूप्यमज्जादि परिग्रहः ।

(५) कुङ्कुमैः ।

(६) रक्तचन्दनैः ।

(७) मातृकायाः ।

(८) मन्त्रवर्णान् ।

विलिख्य मन्त्राक्षरपंक्तिमादौ
पत्रे क्वचि (१) चन्दनमिश्रतोयैः।
संताड़येद् यंसहितामुकार्णं
यंताड़यामीत्यपि (२) ताड़नं स्यात्॥ १८॥

आलिख्य मन्त्रं करवीरपुष्पै
र्मन्त्रार्णसंख्यै रमृतार्ण (३) मुक्त्वा।
प्रवोधयामीति तथा निहन्यात्
प्रत्यक्षरं वोधनमेतदाहुः॥ २०॥

तथाविलिखितं मनो र्लिपिगणं च तत्संस्थकै
र्द्दृढै रश्वलदलच्छदै रुपहृतेन सत्पायसा (४)।
मनो रमुकमक्षरं स्वमनुनाऽभिषिञ्चाम्यहं
ध्रुवं स्वदभिषेचयेदिति मतोऽभिषेको मनोः॥ २१॥

तारं व्योमहुताशविन्दुमनुयुग्ज्योतिर्मनुः (५) कीर्त्तित
स्तेन स्वे हृदि चिन्तितस्य च मनो स्त्रेधा मलं निर्द्दहेत् (६)।
स्यादेषा विमलीकृति र्मनुमलं स्यादाणवं कार्म्मणं
तद्वन्मायिकमित्यमीभि रमितो मन्त्रो मलै र्म्लायते॥ २२॥

---

(१) कश्चित् पूर्व्वोक्तान्यतमकल्पे।
(२) यं पुटितमन्त्रमक्षरं ताड़यामीत्यर्थः। (३) वं वीजं।
(४) अश्वत्थपत्रै र्द्दृढैरानीतेन गुप्तोदकेनेत्यर्थः।
(५) ह्रौं इति ज्योतिर्मन्त्रः।
(६) ज्योतिर्मन्त्रेण अमुकमन्त्रस्यामुकमलं दहामीतिप्रयोगः।

सूक्ष्मैः स्वावयवाक्षरार्च्चिरणुभिः स्यादाणवं यन्मलं (१)
पुण्ये कर्म्मणि पापकर्म्मणि पुरा संयोजितत्वात् स्वयं।
यत् स्यात् कार्म्मण मेतदेव (२) जपतोऽभीष्टार्थदानाय यत्
क्षत्वा भेद महं करोति स मनु स्तन्मायिवं स्यान्मलं (३)॥ २३॥
मन्त्राक्षरान् भुवि विलिख्य तदेक मेक-
माप्याययामिवचसा शतधाऽभिषिञ्चेत्।
मूलाणुना कुसुमदर्भसुवर्णतोयै
राप्यायनं मत मिदं मुनिभि र्मनूनां॥ २४॥
कुशाम्बुनैव वैष्णवः प्रसूनपाथसैश्वरः।
चरन्ति शाक्तिकादयः सुवर्णपाथसैव तत् (४)॥ २५॥
मन्त्रतो मन्त्रितैः संस्कृतै र्वारिभि
स्तर्पयेन्मन्त्र मेतन्मतं तर्पणं।
इन्दुमद्भि (५) र्जलै र्वैष्णवः शाम्भवः
साज्यपुष्पैः (६) परे क्षौद्रसम्मिश्रितैः (७)॥ ६३॥
तारमायारमान्तर्गतं (८) स्वं मनुं जपेत् साष्टयुक्तं शतं संयतः।
दीप्यते तेन मन्त्रो निजेनौजसा दीपनं चैतदुक्तं मनो र्मान्त्रिकैः॥२७॥

---

(१) सूक्ष्मैः मन्त्रावयवैस्तत्तदक्षरतेजः परमाणुभिराणवं मलमित्यर्थः।
(२) शुभाशुभोभयकर्म्मप्रयोगोत्थं कार्म्मणं मलं।
(३) यत् अमुरभीष्टमहं ददामीतिभेदं क्षत्वा अहं करोति तन्मायिकंमलं।
(४) आप्यायनं। (५) कर्पूरोदकैः।
(६) साक्षतपुष्पैः, इदं जलैरिति पूर्व्वान्वयि।
(७) मधुमिश्रैः, अत्रापि जलैरित्यस्यान्वयः।
(८) ओं ह्रीं श्रीं पुटितं।

जप्यमानं मनुं प्रत्यहंसंजपन् गोपवेशमिरेषा मनो रीरिता ।
एभि रुक्तक्रमात् संस्कृत स्तेन्मनुः पूर्वसेवां विना सिध्यतीति प्रथा ॥२८॥

इत्थं संस्कृतमन्त्र (१) एष मनुवि दद्दासनः स्थण्डिले
संस्थाप्य प्रतिमादिकं (२) च किमपि स्वर्णादिपीठोपरि ।
तस्मिन्नेव हि वक्ष्यमाणविधिना राजाधिराजोचितैः
शक्त स्तेन्निजदैवतं प्रियतया (३) नानोपचारैर्यजेत् ॥ २९ ॥

महापूजां (४) कर्त्तुं यदि न कुशलः स्याद्दिभवतो
विपन्नत्वा द्वाऽसौ दशभि रुपचारै रभियजेत् ।
अशक्तस्ते त्तस्मिन्नपि यजतु पञ्चोपहृतिभि
स्तथाङ्गेन्द्राद्यस्त्राद्यावृतिभि रुचितेनैव (५) विधिना ॥ ३० ॥

तत्राशक्तौ केवलै र्गन्धपुष्पै र्गन्धालाभे केवलै र्वा प्रसूनैः ।
संपूज्यांगं मानसैरिष्ट देवं ध्यात्वाभ्यच्चेंद्देवयोग्योपचारैः ॥ ३१ ॥

अपान्यच्चेत्पूजाध्वनि (६) किमथवाऽत्रानधिकृत-
स्तदासौ स्वैर्दर्भै र्बहुभि रुपचारैः प्रियतया ।
द्विजद्वारा पूजां रहसि रचयित्वाऽथ विधिव-
ज्जपं कुर्य्यात् शक्तःक्वचन धनशाठ्यं (७) न चरयेत् ॥ ३२ ॥

---

(१) संस्कृतोमन्त्रो यस्य सः । (२) आदिपदेन यन्त्रादिकं ग्राह्यं ।

(३) प्रेम्णा । (४) शतोपचारादि षोडशो पचारान्तं ।

(५) अङ्गदिक्पालतदस्त्राद्यावरणैः सहपञ्चोपचारैः प्रभुं पूजयेत् । उचिते-नेत्युक्ते दशोपचारपक्षे सप्तावरणैः महोपचारपक्षे द्वादशावरणैः सह पूजा बोध्या ।

(६) पूजामार्गे अशक्तश्चेत् ।

(७) समर्थो जनः क्वचन पूजनोपकरणादौ धनशाठ्यं नाचरेदित्यर्थः ।

विनोपचारै रिह नास्ति पूजा
पूजां विना नास्ति जपः कदाचित् ।
तस्माद् यथाशक्त्यशतोपचारैः
संपूज्य देवं जप मारभेत ॥ ३३ ॥
उद्वास्य (१) देवं हृदि पूजनान्ते
विन्यस्य मुद्रादिकरादिमन्त्रान् ।
निष्कम्पसर्व्वावयवान्तरात्मा
ध्यात्वा पुनर्देव मिहोक्तरूपं ॥ ३४ ॥
ध्यानेन सर्व्वकार्य्याणि सिध्यन्ति न परंजपे (२) ।
तस्मात्समभ्यसे ध्यान मिति शास्त्रानुशासनं ॥ ३५ ॥
निःकृत्वाऽनिलसंयमं स्वमनुनाऽसौ वक्ष्यमाणाध्वना
वर्णाद्वर्ण मथो पदादपि पदं मन्त्रस्वरूपं स्मरन् ।
वस्त्राच्छन्नकरेण वक्षसिगतेनादाय मालां जपे
दङ्गुष्ठेन मणीन्नयन् करतलं तन्मेरुमूलादितः ॥ ३६ ॥
यावन्माला पुच्छतो मेरुमूलं (३)
तावन्मालां मन्द माकृष्य नीत्वा ।
प्राप्ते मेरौ मध्यमाङ्गुष्ठयोगा
देनं पर्य्यावर्त्तये द्दक्षगत्या (४) ॥ ३७ ॥

---

(१) देवंस्वहृदि उपसंहृत्य । (२) ध्यानहीन जपे न सिध्यन्ति ।
(३) पुच्छक्रमेण यावन्माला मेरुमूलान्तं गच्छेत्तावदित्यर्थः ।
(४) प्रादक्षिण्येन भ्रामयेदित्यर्थः ।

भूयो मालामूलतः प्रारभेत (१)
नैनं मेरुं लङ्घयेद्वा प्रमादात् (२) ।
दृष्टे (३) हस्ते लङ्घिते चापि मेरौ
गृह्णन्त्येतद् (४) यक्षरक्षःपिशाचाः ॥ ३८ ॥

तर्ज्जन्यङ्गुष्ठयोगा द्विहितजपविधि र्विद्विड़ुच्चाटने स्या-
द्भुक्तौ मुक्तौ तथाकृष्टिषु च निगदितो मध्यमाङ्गुष्ठयोगात् ।
अङ्गुष्ठानामिकाभ्यां स्रज मिह कलये (५) दु त्तमेष्वेव कर्म्म-
स्वन्त्याङ्गुष्ठप्रयोगाद्भवति (६) खलु जपो मारणादौ प्रशस्तः ॥ ३९ ॥

तर्ज्जन्या न स्पृशेत् सूत्रं न जपेच्चेति केचन ।
शत्रुक्षयकरो शस्ता तर्ज्जनीति परे जगुः ॥ ४० ॥

विनारिशान्तिं न जपे त्तर्ज्जन्या मन्यकर्म्मणि ।
मुमुक्षु र्वा जपे त्तस्या मरिषड्वर्गशान्तये ॥ ४१ ।

इत्यङ्गुलीनां नियमं विदित्वा जपो विधेयो जपमालयैव ।
तथा कुशग्रन्थिभि रङ्गुलीनां जपेत्तु संकुञ्चकरोदरः (७) स्यात् ॥४२॥

अन्योन्यसक्ताङ्गुलि रत्र (८) भाव्यो वियोजिताखङ्गुलिषु प्रमादात् ।
जपः स्रवत्येव तदीयरन्ध्रै स्तस्मा ज्जपेदङ्गुलिभि र्युताभिः ॥ ४३ ॥

---

(१) जपमितिशेषः । (२) असावधानतया ।

(३) पूर्वं वस्त्रावृतकरेण जपविधाना द्दैवात् स्खलद्वस्त्रतया हस्तदर्शने-जातेसतीत्यर्थः । (४) जपकर्म्म ।

(५) पुष्ट्यादि शुभकर्म्मसु अङ्गुष्ठानामिकाभ्यां मालां चालयेदित्यर्थः ।

(६) कनिष्ठाप्रयोगात् ।

(७) कुञ्चीकृतं करोदरं यस्य । (८) अङ्गुलिजपे ।

रेखाभिः पर्व्वभि र्वा निगदितविधिना (१) यज्जपेद्दक्षपाणौ-
तत्संख्यां वामहस्ताङ्गुलिषु दशगुणां तद्वदादौ गृहीत्वा।
तत्संख्यां प्रागुदीचिक्रमगतकठिनीरेखया वा (२) कुशै र्वा
भूमौ भूयोऽवधार्य्य स्वयमिति गणनापूरणं चाऽवगच्छेत्॥ ४४॥

नित्यनैमित्तिकादौ जपेऽयं विधिः
सर्व्वसाधारणः संस्मृते स्मारणः।
ये जपन्ति प्रमादा द्विना तेन वा
मन्त्रमात्रं मनोः सा मता संस्मृतिः (३)॥ ४५॥

त्रिपदा मयुतं जपेत् पुरस्ता त्त्रिषु कालेषु तथा निशीथ मेकः।
अनुरक्तमना निरम्बुभक्ष्यो विधिनाऽनेन विधूय पापसंघं॥ ४६॥

जपेदिष्टमन्त्रं निजाभीष्टसिद्ध्यै
ततोऽन्येद्यु (४) रारभ्य यावत् समाप्तिं।
प्रभाता च्च मध्याह्नपर्य्यन्त मादौ (५)
दिने यावती स्या ज्जपावृत्तिसंख्या॥ ४७॥

तावज्जपेत् प्रतिदिनं कृतसंख्यया वा
न्यूनं न चाधिक मतो न दिनं विलङ्घेत्।
पूर्णे तदाह्निकजपे (६) निजदेवतायाः
पाणौ तदाम्बुचलुकेन समर्पयेत्तं॥ ४८॥

---

(१) यदिति यावदर्थं। तेन यत्संख्यकं जपेदित्यर्थः।

(२) पूर्वदक्षिणा उत्तरदक्षिणा वा क्रमगता या कठिनीरेखा तया कुशैर्वा।

(३) यः प्रमादात् पूजादिकमकृत्वा मन्त्रमात्रं जपति तस्य तत्कर्म्म मनोः स्मरणमुच्यत इत्यर्थः। (४) परस्मिन् दिने। (५) प्रथमदिवसे।

(६) तस्मिन् दैनं दिन जपे पूर्णे सति।

पुंदेवतादक्षिणपाणिपद्मे
स्त्रीदेवताया अथ सव्यपाणौ ।
जपः समर्थ्यो मनुनाऽमुनैव
गुह्यातिगुह्येति विचिन्त्य (१) लिङ्गं (२) ॥ ४८ ॥
आदौ जपस्याथ जपावसाने संस्मृत्य मुन्यादि मनन्यचेताः ।
कृत्वा मरुत्संयमनं त्रिकृत्वः प्रणम्य देवं समुपैति सिद्धिं ॥ ५० ॥
नैरन्तर्य्यविधि मतोऽय मृषिभिर्नित्ये जपेऽन्यत्र (३) वा
मन्त्रावृत्तिमयो जपः स च भवे द्वाग्वृत्तिभेदा त्त्रिधा ।
आदौ मानस उत्तम स्तदवर स्तेषा मुपांशु र्जप-
स्तस्माद्वाचिक उच्यतेऽधमतया तेषु त्रिधा (४) कर्म्मसु ॥ ५१ ॥
कृमा द्धियां मन्त्रपदार्णपंक्ति मारोप्य तच्चिन्तनवद्यत्नः ।
रसज्ञया निश्चलया स्वमन्त्र मुच्चारयेद् यत्र स मानसः स्यात् ॥ ५२ ॥
संचाल्य किंचिद्रसनां तथौष्ठौ
यथात्म मात्मश्रुतिगोचरः (१) स्यात् ।
उच्चारये न्मन्त्र मुदीर्ण वर्णं (२)
तथैव यस्मिन् स जपो ह्युपांशुः ॥ ५३ ॥

---

(१) अत्र विविच्य इति (ग) पुस्तके पाठः सोऽप्यत्रतदर्थः ।

(२) स्त्रीपुंदेवतासु यथायथं लिङ्गप्रयोगेण सव्यासव्यपाण्यो र्जपः समर्प्य इत्यर्थः ।

(३) नैमित्तिकादौ ।

(४) एतच्चाग्रे व्यक्तीभविष्यति ।

(५) न तु परस्य श्रवण गोचरः ।

(६) स्पष्टाक्षरं ।

यत्नोच्चनीचैः स्वरितै (१) स्व शब्दै र्वाचा मनुः स्पष्टपदाक्षरैश्च (२)।
समीपवर्त्तिः श्रुतिगोचरः सन्नुच्चार्य्यते वाचिक एष बोध्यः ॥ ५४ ॥
स वाचिकः स्यादभिचारसिद्धा वुपांशुकः शान्तिकपौष्टिकादौ
मुक्तौ जपे मानस एवमुक्तः स्वराक्षराणा (३) मनुचिन्तनेन ॥ ५५ ॥
जपे नैकवासा स्तथानेकवासा
नचानासनस्थ स्तथा भीनिदुःस्थः।
नचोष्णीषवान् (४) कञ्चुकी (५) मुक्तकेश
तथा च्छिन्नसूत्राक्षमालोपवीतः (६) ॥ ५६ ॥
विलम्बं वेगं वा हसित मितरप्रेक्षित मथो
तनोः कम्पं कण्डूयन मितरसंभाषण मपि।
क्षुतं जृम्भारम्भं प्रणति मथवोत्थानरभसं (७)
न शंसन्ति प्राज्ञा जपविधिषु संसक्तमनसां ॥ ५७ ॥
काम्य मन्य दिह कर्म्म वर्ज्जये द्गन्धमाल्यवरवस्त्रभोगितां।
स्नानकर्म्मविधुरान् (८) द्विजान् वधूर न्त्यजानपि न संस्पृशे द्बुधः ॥५८॥

---

(१) उदात्तानुदात्तस्वरितैः।

(२) स्पष्टानि पदाक्षराणि येषु तैः।

(३) शिष्यबुद्धिदार्ढ्याय पुनर्लक्षणं।

(४) वस्त्रावृतशिराः।

(५) वस्त्रसंवृतगात्रः।

(६) छिन्नं सूत्रं ययोस्ते छिन्नसूत्रे, अक्षमाला च उपवीतं चाक्षमालोपवीते। छिन्नसूत्रे अक्षमालोपवीते यस्य तादृशः।

(७) अभ्युत्थान वेगं।

(८) अशुचीन्।

पतितान्त्यजनीचयोषिता मवलोके सति भाषणे श्रुते।
गुदवायुगतौ च जृम्भणे क्षुति निद्रापतने जपं त्यजेत्॥ ५८॥
उत्थायासौ पाथसाऽऽचम्य च द्विः
प्राणायामां स्त्रीं श्च कृत्वा दिवाऽर्कं (१)।
पश्येद्रात्रौ चेद् ध्रुवं वीक्ष्य भूयो
न्यासं कृत्वा शेषकर्म्माऽनुतिष्ठेत्॥ ६०॥
यदि निपतति माला भ्रस्ततो हस्तकोषात् (२)
पुनरपि शतकृत्वो मन्त्र मष्टाय जप्त्वा।
विदलति सति तन्तौ तन्तुना संस्कृतेन
ग्रथन मनु परिष्कृत्याऽन्यकर्म्माऽवशेषं (३)॥ ६१॥
त्वं माले सर्व्वदेवानां सर्व्वसिद्धिप्रदा मता।
तेन सत्येन मे सिद्धिं देहि मात र्नमोऽस्तु ते॥ ६२॥
अमुना मनुनाऽभिवाद्य मालां
शिरसाऽऽधाय सितेन वाससैव।
अभिगोप्य निवेशयेत् प्रयत्ना-
दशुचिः कश्चि दिमां स्पृशे न्न येन (४)॥ ६३॥

---

(१) दिवसेचेत् अर्कं रात्रौचेत् ध्रुवं वीक्ष्येत्यन्वयः।

(२) शब्देजाते भवेद्रोगः करभ्रष्टो विनाशकृत्। छिन्नसूत्रे भवेन्मृत्युरित्यस्मा-
द्यत्न परोभवेदिति स्मरणादित्याशयः।

(३) तन्तौस्त्रुटे छिन्नेसति संस्कृतेन तन्तुना ग्रथनं विधाय पुनःसंस्कृत्याव-
शिष्टं कर्म्म समापनीय मित्यर्थः।

(४) प्रकारेण। यथेति यावत्।

हवन मथ दशांशं नित्यसंख्यासमाप्तौ
धनपतिदिशि कुण्डे पूर्व्ववत् संस्कृतेऽग्नौ।
अभिमुख मतिदीप्तं चिन्तयित्वेष्टदेवं
रचयतु मनुनैव स्वस्वकल्पोक्तहव्यैः (१) ॥ ६४ ॥
नारायणीये मधुराक्तपद्मैः सत्पायसैर्नैशमनी च शाक्ते।
सिद्धै स्तिलाज्यै रथ गाणपत्ये द्रव्याष्टकै र्मोदकलाजमुख्यैः ॥ ६५ ॥
सौरे क्षीरमहीरुहोत्थसमिधा गोक्षीरसंसिक्तया
होमः स्या दथवाऽखिलेषु च परिज्ञेयं हुतं गोघृतैः।
काम्ये कल्पसमीरितैः किमथवा यद्वस्तु लिप्सन् जपे
त्तद्रव्यैरिति के च नो चु रवधार्य्येमं विदध्या द्धुतं ॥ ६६ ॥
रक्षेदग्निं तावदावद्ययत्न स्तस्याभीष्टा यावता कर्म्मसिद्धिः।
दोषो भूयां स्तत्र कीटादिघाते भूया दस्मा त्तन्निवृत्तैर यतेत ॥ ६७ ॥
प्रमादा न्नष्टश्चेत् स च हुतवहः स्यात् पुनरपि
प्रणेतव्यो हव्योचितविधिभि रिष्टेन मनुना।
निपाते कीटादेः पुन रनल मभ्युक्ष्य सलिलै
र्घृते रष्टौ हुत्वा तदनु निजहोमं वितनुयात् ॥ ६८ ॥
अशक्तानां होमे निगमरसनागेन्द्रगुणितो
जपः प्रोक्त श्चेति द्विजनृपविशा माहु रपरे।
सहोमश्चैतेषां सम इह जपो होमरहितो
य उक्तो वर्णानां स खलु विहित स्तत्कलदृशां (२) ॥ ६९ ॥

---

(१) स्व स्व कल्पविहितहवनीयद्रव्यैः।

(२) यद्यपि ब्राह्मण क्षत्रिय वैश्यानां होमसहितोजपस्तुल्य स्तथापि यस्य वर्णस्य होमरहितोयावान् जपउक्त स्तत्पत्नीनां तावानेव विहित इत्याशयः।

चतुर्गुणं ब्राह्मण आचरे ज्जपं महीपतिः षड्गुण मूरुसम्भवः ।
समाचरे दष्टगुणं नचान्यथा हुतानुकल्पे जप ईरितो विधिः ॥ ७० ॥
स्त्रीशूद्राणां नास्ति होमेऽधिकार
स्तस्मात्तेषु: प्रोक्तया संख्ययैव ।
तत्पत्नीनां तत्र तावान् जपःस्या
द्धोमो न स्या दाशयोऽयं वुधानां ॥ ७१ ॥
शूद्रः शुश्रूषु रेषां कमपि न न भजन् वर्त्तते स्वैरवृत्त्या
तस्माद्यद्वर्ण मेवाश्रयति पुनरसौ तस्य पत्न्यां तथैव ।
यावत्संख्यो जपःस्या ज्जप इह विहित स्तस्य शूद्रस्य भक्ति
श्रद्धायुक्तस्य शक्तस्य च पुन रितरद्वारतः कुर्व्वतो वा (१) ॥ ७२ ॥
होमानुकल्पे विनियोग मुक्ता
ततोऽनुकल्पं जपकर्म्म कुर्य्यात् ।
तत्तर्पणे कर्म्मणि मार्ज्जने च
सत्या मशक्तौ विहितोऽनुकल्पः ॥ ७३ ॥
इति होमविधिं समाप्य नित्यं
दिनमध्याभिषवादिकं (२) च कर्म्म ।
कृतहोमदशांशतः स तस्मिं
स्तनुया त्तर्पण मिष्टदेवतायाः ॥ ७४ ॥

---

(१ ब्राह्मण क्षत्रिय विशां मध्ये यं यः शूद्रोऽनुनतः सेवते तदाश्रयीभूतस्हि जस्य पत्न्या यावान् जप उक्त स्तस्य शूद्रस्य तावान् जपो बोद्धव्यः ।

(२) माध्याह्निक स्नानादिकं ।

अथ शुद्धजनोपनीततोये विमलैः शुद्धनिचोलगालितैश्च (१) ।
परिचिन्त्य पुरःस्थितेऽम्बुपात्रे निजदेवं विदधातु तर्पणं सः ॥ ७५ ॥

जलएव विचिन्त्य योगपीठं मनसाऽऽवाह्य च देवतां तदन्तः ।
परिपूजयता दथोपचारै रखिलै स्तोयमयैः कृपाम्बुराशिं ॥ ७६ ॥

तद्वक्ष्यमाण (२) सुरतर्पणवाक्यरीत्या
कुर्वीत तर्पण मिहार्पितचित्तवृत्तिः ।
तोयेन गन्धकुसुमाक्षतदर्भभाजा
ध्यातेष्टदेववदनाम्बुरुहे विधिज्ञः ॥ ७७ ॥

अङ्गाना मपिच तथात्मयोग्यमन्त्रै
स्तन्त्रज्ञो रचयतु तर्पणं दशांशं ।
एकैकाञ्जलि मथ पीठशक्तिदेवा (३)
नुद्दिश्याऽऽवृतिगतदैवतानि (४) तद्वत् ॥ ७८ ॥

संतर्प्य स्मरतु पुन र्मनो र्मनीषी
मुन्यादीन्नियमयता दसूंस्त्रिकृत्वः ।
तत्प्रान्ते विनिहितशुद्धचित्तवृत्ति
श्चित्तान्तः पुनरपि देवतां नये त्तां ॥ ७९ ॥

इतितर्पणकर्म्म कीर्त्तितं वहुश स्तृप्तिकरं हि देवतायाः ।
तनुया दथ तद्दशांशतोऽसौ निजमूर्द्धन्यभिषेचनं विधिज्ञः ॥ ८० ॥

---

(१) शुद्धवस्त्रपूतैः ।

(२) वक्ष्यमाणमिति मयेति अनूह्यं ।

(३) आधार शक्त्यादीन् नवशक्तींश्चोद्दिश्य ।

(४) आवरणगत देवानपि ।

कृत्वाऽऽसनादिविधिनैव शरीरशुद्धिं (१)
न्यासान् विधाय हृदि पीठगतं विचिन्त्य ।
आत्मान मिष्टसुररूपिण मात्मक्लृप्तैः (२)
संपूज्य चोपचरितै रथ मार्ज्जये त्तं ॥ ८१ ॥

मन्त्रं नमोऽन्तां निजदेवताख्या
मुक्त्वा द्वितीयासहितां ततोऽहं ।
भूयोऽभिषिञ्चामिपदं निगद्य
स्वमूर्द्ध्नि सिञ्चे ज्जल मङ्गुलीभिः (३) ॥ ८२ ॥

कृतेऽभिषेके स्वय मच्चतात्मा
संपूज्य देवं विविधैः स्वभक्ष्यैः ।
आमन्त्र्य विप्रान् कुलदेशशुद्धान् (४)
संभोजयेद्देवधिया दशांशं ॥ ८३ ॥

आदौ विप्रान् धौतपाण्याननांघ्रीन् स्रग्गन्धाद्यै रर्च्चयित्वाऽऽसनस्थान् ।
तेष्वावाह्य स्वेष्टदेवं प्रणम्य ध्यायेत् साक्षादिष्टदेवस्वरूपान् ॥ ८४ ॥

दत्त्वा पाद्यं मूलमन्त्रेण चार्घं
गन्धं पुष्पं धूपदीपौ समर्प्य ।
नव्ये पात्रे षड्रसै र्दिव्यभक्ष्यै
स्तूष्णीभूतान् भोजयेत् पूर्ववत्तान् ॥ ८५ ॥

---

(१) भूतशुद्धिं । (२) मनः कल्पितैः ।

(३) नमोऽन्तमूलमन्त्रान्तेऽमुकदेवतामहमभिषिञ्चामीति प्रयोगः ।

(४) कुलतोदेशतश्च शुद्धान् इत्यर्थः ।

यथारुचि यथासुखं सपदि भोजयित्वा द्विजा-
नथाचमनवीटिकादिभि रुपास्य बद्धाञ्जलिः ।
स तेषु सुहितेष्वथो मुखगलत्तदाशीर्व्वचो-
विवर्द्धितमहोदयो (५) व्रजति मन्त्रसिद्धिं नरः ॥ ८६ ॥
यदि हुतादिदशांशविभाजने किमपि याति तदङ्ग मिहैकतां ।
अथ ततः प्रभृति प्रविधीयतां विधिवदेककसंख्यक मुत्तरं (६) ॥८७।
नत्वा विप्रान् विसृज्य प्रवणमति रसौ स्वासने संनिविष्टः
श्रौतस्मार्त्तस्तवानां पटुतरपठनै र्यापयेत् शेषमह्नः ।
प्राणायामैः प्रणामै र्निजगुरुसुरयो र्गोऽर्च्चनाद्यापृतो (७) वा
स्नात्वा सायं प्रविष्टे पुनरपि तनुयात् कर्म्म सन्ध्यादि सर्व्वं ॥ ८८ ॥
स्नायात् स्वम स्त्रिषवणं (८) नवपञ्चगव्यै
र्भव्यै स्तथाऽऽमलककल्कविलेपनैर्वा ।
तत्राभिजप्तजलपान मथाशनं वा
कुर्य्यात् प्रतिग्रहविनिग्रहशुद्धहस्तः (८) ॥ ८८ ॥

---

(१) तेषां विप्राणां मुखेभ्योगलन्ति उच्चरन्ति यानि आशीर्व्वचांसि तै र्विवर्द्धितः महोदयो यस्य तादृशः ।

(२) होमादिदशांश विभाजनेकृतेयदि तदङ्ग तर्पणादिकं यत्किञ्चित् एककं भवेत्तदा तद्दशांशासम्भवादुत्तरेषु तदङ्गेषु एकैक संख्या धर्त्तव्येत्याशयः ।

(३) निजगुरुनिजेष्टदेवयोः प्रणामैर्गोसेवयावाऽह्नः शेषभागं यापयेदिति पूर्व्वेणान्वयः ।

(४) त्रयाणां सवनानां कर्म्मकालानां समाहारस्त्रिषवणं ।

(५) प्रतिग्रहस्य परदानस्वीकारस्य विनिग्रहात् निवृत्तेः शुद्धेः हस्तौ यस्य तादृशः ।

जलपानमिहोक्त मुत्तमं च तदशक्तौ हुतशिष्टभोजनं ।
तदशक्तिमतो विधीयते जपदेशोचितभक्ष्यभोजनं ॥ ८० ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्वस्वे जपादिपञ्चाङ्गविनिर्णयो नाम चतुर्दशः संग्रहः ॥ ० ॥

## पञ्चदशः संग्रहः ।

भुञ्जीत चेद् यजनहोमजपावसाने
रात्रेर्मुखादपगते त्रितये मुहूर्त्ते (१) ।
पूर्व्वाननो रहसि सप्तमनुप्रजप्त-
सिद्धाञ्जनाञ्चितदृगेव (२) विविक्त मन्त्रं ॥ १ ॥
जपन्न (३) द्रिशृङ्गे च भुञ्जीत शाकं
नदीरोधसि स्वादु शुद्धं च कन्दं ।
फलं विल्वमूले दधि स्वादु गोष्ठे
पयो वष्कयिण्या श्च (४) ह्रद्दघ्नतोये (५) ॥ २ ॥

(१) मुहूर्त्तं घटिकाद्वयं। घटिकाशब्दो दण्डपरः। तेनषण्डघट्के गते सतीत्यर्थः ।

(२) सप्तवारं मनुना प्रजप्तेन सिद्धाञ्जनेन अञ्चिते दृशौयस्य तादृशः ।

(३) जपन्निति सर्व्वत्रानुषङ्गः ।

(४) तरुणवत्साया गोः ।

(५) ह्रद् वक्षः प्रमाणं यस्य तादृशे, वक्षो मज्जनयोग्ये इति यावत् ।

गुरो विष्णुगेहे स्वयं भिचितान्नं (१)
यवचोदसक्तू स्तथाश्वत्थमूले।
सुदुग्धोदकं सिन्धुतीरे जपं स्वे-
ष्वच स्थानभच्यं व्यतीतं (२) विदध्यात् ॥ ३ ॥

अन्यत्र नास्ति नियमः किमपीह भच्यं
शुद्धं हविष्य मुपयुज्य निशां नयेत।
ब्राह्मे दिने मृदुनि किंशुकदच्चिणस्थे (३)
ऽमत्रेऽशनं लघु मतं कलधौतके (४) वा ॥ ४ ॥

खिन्नं (५) पर्य्युषितं (६) च तैलमधुसच्चारं करञ्जं तथा
निम्बं विम्बमसूरकोद्रवभवं मांसं विषं मूलकं।
ताम्बूलं लशुनं दिवाशन मपि स्नेहेनशून्यं दिवा-
स्वप्नं द्यूतविहारगीतकुतुकारम्भं त्यजे ज्जापकः ॥ ५ ॥

आरनालकरले (७) च गुञ्जनं कांस्यपात्रमधुमांसभोजनं।
मन्त्रवीर्य्यहरमीरितं वुधैःसर्व्वथाऽनृत मुदीरितं तथा ॥ ६ ॥

---

(१) गुरुगृहे देवालये च जपन् स्वकृत भिक्षया लब्धमन्नं भुञ्जीत इत्यर्थः।

(२) यत्रस्थाने यद्रव्य सक्तं तद्दात्ययं न कुर्य्यादित्यर्थः।

(३) पत्रत्रयवतः पलाशस्य दक्षभागीयं पत्रं ब्राह्ममुच्यते तादृशेऽमत्रे पात्रे दिवा भुञ्जीत इत्याशयः।

(४) कलधौतं रूप्यहेम्नोः।

(५) अस्वपक धान्य जन्य तण्डुल प्रभवं।

(६) यातयामभक्तं।

(७) आरनाल पदं काञ्जिकापरं करलपदं तु (करला) इतिख्यातद्रव्य-परं पटोलपरमिति केचित्।

स्त्रीणां वार्त्ता दर्शनस्पर्शकृत्यं दूरे त्यक्त्वा दर्भशय्योपरिष्टात्।
सद्यो धौतं वस्त्र मास्तृत्य मन्त्री तत्रैकाकी निर्भयः संविशे (१) त्सः ॥७

स शय्यायां प्रत्यहं चालितायां
संविष्टः स्यात् कम्बले वाऽजिने वा।
पत्नरा स्तस्मिन्नार्त्तवं चेत् निशीथे
ता मालिङ्गेत् क्वापि रेतो न सिञ्चेत् (२) ॥ ८ ॥

यावत् सुषुप्ति रुपयाति निशासु ताव-
द्रामादि-चिन्तन-पुरःसर (३) मिष्टमन्त्रं।
देवं च चिन्तयतु चेतसि तत्र (४) लीने
स्वप्ने क्वचित् क्वचिदभीष्ट मभीक्षते सः ॥ ९ ॥

तत्तन्निश्चित्य नित्यं तदुषसि गुरवे ज्ञापयित्वा पुरोव-
न्नित्यं निर्व्वर्त्त्य मन्त्रं जपतु हृदि कृता यावता स्यात् समाप्तिः (५)।
केचित्त्रिंशद्दिनानि ब्रुवत इह यतः सावनो मास (६) उक्तो
राधाच्छुक्लद्वादशीतः प्रभृति भवति सा ज्येष्ठशुक्ला च यावत् (७) ॥१०॥

---

(१) शयीत इत्यर्थः।

(२) जपदिवसे पत्न्या ऋतुस्नान मापतेच्चेत्तां निशीथे आलिङ्गेदेव न तु शुक्रं क्षरयेदित्यर्थः।

(३) रामं स्कन्दं वैनतेयं हनूमन्तं वृकोदरं। शयने यःस्मरेन्नित्यं दुःस्वप्नं स न पश्यति। (४) मन्त्रदेवतायां।

(५) मनसि कल्पितायाः संख्याया यावतादिवसेन समाप्तिः स्यादित्यर्थः।

(६) चन्द्रसूर्य्ययोः क्रियामनिमित्तीकृत्य स्वातन्त्र्येण त्रिंशद्दिनसमूह-लक्षणः।

(७) वैशाखशुक्लद्वादशीमारभ्य ज्येष्ठशुक्लद्वादशीपर्य्यन्तंमासं यावत् पुरश्चरण काल इत्याशयः।

इत्थं केचित् कुर्व्वते पूर्व्वसेवां (१)
शुक्लाश्विन्या द्वादशीतो यथावत्।
ऊर्ज्जश्वेतद्वादशीवासरान्तं
शेषे (२) होमादिक्रिया पूर्णिमान्तं ॥ ११ ॥
अन्यत्र कुर्य्यादनयो रभावे दोश्चोदिते मासि पुरोक्ततिथ्यां।
आरभ्य तावद्दिवसान्ततिथ्यां समापयेत् केचिदितीरयन्ति ॥ १२ ॥
अल्पार्णसंख्यमनुजापविधान मल्पै
र्वह्वर्णसंख्यकमनो र्वहुभि र्दिनैश्च।
संसाध्यते यदि तदाऽहनि यत्र संख्या
संपूर्य्यते तदहरेव समापनीयं ॥ १३ ॥
संख्यापूर्त्तौ साचतै र्दर्भयुक्तै रर्घाम्भोभिः पाणिपद्मेऽभिरामे।
देवस्येदं मूलमुच्चार्य्य तेजोरूपं ध्यात्वा वेदयेत् कर्म्म जाप्यं (३) ॥१४॥
ब्रह्मार्पणाख्यमनुना सकलं समर्प्य (४)
ओँ तत्सदित्यथ वदन् निजदेवतायै।
आत्मान मर्पयतु तेन तदस्य कर्म्म
पूर्णं भवत्यखिल मेव तदीयतोषात् (५) ॥ १५ ॥

---

(१) पूर्व्वसेवां पुरश्चरणं।

(२) त्रयोदश्यादौ।

(३) चरम संख्या पूरणेसति दर्भयुक्तैरक्षतयुक्तै रर्घाम्भोभि र्मूलमुच्चार्य्य अर्घञ्च तेजोरूपं ध्यात्वा देवस्य पाणिपद्मे समर्पयेदित्यर्थः। तत्रदैवताविशेषे पाणिनियमः प्रागुक्तो वेदितव्यः।

(४) इतः पूर्व्वमित्यादिना।

(५) ओँ तत्सत् मां मदीयं च सकलं अमुक देवतायै समर्पयामि।

समाप्ते सर्व्वोक्ते भवति मनुसिद्धि र्विधिवशा-
त्तदा शेषं कृत्यं विधिवदवसायैव विरमेत्।
न चेदेवं (१) संख्यावसितिदिवसे तद्गतमना
निशीथान्तं जप्यादपि स वहुधा विघ्नविहित: (२) ॥ १६ ॥
विघ्नं कुर्व्वन्ति देवा मनु मनुजपतो धीपरीक्षार्थ मादौ
तेन भ्रान्त: स चेत्स्यात् स्वय मनृणतया ते तदोपारमन्ते (३)।
मन्त्री चे द्धैर्य्यशील स्मरति तदुपधिं देहगेहाद्यनास्थ:
प्रत्यक्षं याति तस्मै वदति च वर मामन्त्र गीर्व्वाणवाण्या ॥ १७ ॥
यावद्गीर्व्वाणवाणी विशति न पदवीं श्रोत्रयो स्तावदन्त-
र्दृष्टि: सन्निश्चलात्मा पुनरपि मनसा देव माराध्य जप्यात्।
दृष्टे देवे तथात्वे सति खलु लभते साधको मन्त्रसिद्धिं
मन्त्रे सिद्धे त्रिलोकीं जयति किमपरं सिद्धि रेषा दुरापा ॥ १८ ॥
किंवा तस्यां निशि दिशिदिशि ज्योति रिन्दो रुदेति
दिव्य: शब्द: प्रसरति ततश्चेत उल्लासमेति।
कर्णाभ्यासे दिवि कलकलं श्रूयते दिव्यवाचा
मेवं जाते वितरति वरं देवता स्वप्नगत्या (४) ॥ १८ ॥

(१) एवं जपसमाप्तिपूर्व्वं सिद्धिर्नचेत्।

(२) वहुधाविघ्नाभिभूतोऽपि निशीथान्तं जप्यादित्याशय:। एवं चात्र "विघ्नविहत:" इत्येवपाठो भवितुमुचित:।

(३) मन्त्रजापक: सुरकृतविघ्नेन भ्रान्तश्चेत् तदा आनृण्याद्देवा वरदानान्निवर्त्तन्ते दृढ़सेवया खलु देवाना मृणित्व मुपजायते। विघ्नोपहतस्य दृढ़सेवाभावादानृण्यं देवानामिति न वरदाने वाध्यत्वमिति रहस्यं।

(४) एवं वक्ष्यमाणान्यतम]सूचके जाते स्वप्नावस्थायां वरं ददातीति भाव:।

एवं निशा मपनय बुषसि प्रबुद्ध:
कृत्वाऽऽह्निकं च महती मथ देवताया:।
पूजां विधाय गुरुदैवतभक्तियुक्त:
पूर्णाहुतिं वितनुया न्मनुना पुरोवत् ॥ २० ॥
प्रतिदिन मिह होमाद्यङ्गकृत्यं नचेत् स्या-
त्तदनु चरमसंख्यापूरणे तत् समाप्य।
अकृतकृतजपादे: साङ्गतासिद्धिकामो
निखिलमनुषु विष्णुं संस्मरेदों त्रि रुच्चै: (१) ॥ २१ ॥
संख्या हि मन्त्राक्षरसंख्यलक्षा साधारणी प्राग्भजने मनूनां।
क्वचिन्मते लक्षजपा न्मनूनां सिद्धि र्भवेदित्यपि लक्षमात्रा ॥ २२ ॥
एवंविकल्पेऽपि विनिश्चयोऽयं कल्पोदिता यस्य हि या च संख्या।
ग्राह्यैव सा तस्य ततोऽपरस्य ह्यनुक्तसंख्यस्य विकल्पपक्ष: ॥ २३ ॥
एकद्वित्रिचतु: क्रमेण गुणिता संख्या मनूनां मता
तत्संख्यो हि जप: फलत्यनुयुगं सत्यादिषु प्राणिनां।
तस्मादत्र चतुर्गुणा ऽन्तिमयुगे संख्या विधेया पुर-
श्चर्यायां नतु साऽऽदृता युगकृता गोपालमन्त्रे क्वचित् (२) ॥ २४ ॥

---

(१) प्रतिदिनं जपानन्तरं तदङ्ग होमादिकं न विधातुं शक्यते चेत्तदा चरम-संख्यापूर्त्तौ तत्कृत्वा अकृतान्यथाकृतकृतजपादे: साङ्गता सिद्ध्यर्थं सर्व्वविध-मन्त्रजपेषु विष्णुस्मरणं त्रि: प्रणवोच्चारणं च उच्चै: कुर्य्यादित्यर्थ:।

(२) कल्पोदिता यस्य मन्त्रस्य या संख्या, सतत्रादियुगेषु तामेकद्वित्रिचतु-र्गुणां कृत्वा पुरश्चर्य्यात्। गोपालमन्त्रस्य तु न युगकृत विशेषोऽस्ति। कलावपि कल्पोक्तसंख्यकजपेनैव सिद्धि स्तस्येत्याशय:।

सहस्र मथवा शतं तदनु भोजयेद्भूसुरा

न्निमंत्र्य भगवद्धिया समभिपूज्य पर्य्यायतः।

तत स्तदनुतोषतो हृदि विचिन्त्य संपूर्ण तां

प्रमादपरिशुद्धये क्वचिदिहास्ति नान्यो विधिः॥ २५॥

पूजितेन गुरुणाथ पूर्व्ववत् कुम्भसिद्धसलिलाभिषेचितः।

दक्षिणां स्वगुरवे तथा ददे द्दीनदुर्गतजनां श्च तोषयेत्॥ २६॥

पुरश्चरण मीदृशं प्रतिविधाय सिद्धि नं चेत्

पुरश्चरतु पूर्व्व दृढ़धिया त्रिकृत्वो वुधः।

क्वचित् फलनिराशया निरलसो न हन्या न्मनः

शरीर मिहपातयेत् किमथवा मनुं साधयेत्॥ २७॥

तथापि सिद्धो न भवे न्मनु र्यदा

सुषुप्तवद्वा पशुभाव माश्रितः।

तदा सुषुम्णाध्वनि मूलतो नयेत्

सुधामयीं कुण्डलिनी मनु द्रुतं॥ २८॥

विलाप्य मन्त्राक्षर (१) मान्तराक्षरे-

ष्वमुष्य नादं परमे शिवेऽक्षरे (२)।

पुनः स्वशक्त्या (३) ऽऽन्तरमातृकाक्षरा-

न्मनुं समुच्चार्य्य सुधामयं स्मरेत्॥ २९॥

---

(१) मन्त्राक्षरं आन्त मातृकावर्णेषु विलाप्य।

(२) अमुष्य मन्त्रस्य रवं परमशिवे विलाप्य।

(३) कुण्डलिन्या।

ततो मनु र्जागरितोऽथ जापतो
भवेत् सुसिद्धः फलतोह मन्त्रिणः।
एवं न चेत्स्या दमृतत्रयेण तं
मनं पुटीकृत्य पृथक् पृथक् जपेत् ॥ ३० ॥
भुवनाधिपति श्च मातृका प्रणवश्चे त्यमृतत्रयं मतं।
अमृतापूटितो मनु र्जपादमृतत्वं प्रतिपद्य सिध्यति ॥ ३१ ॥
एवं कृत्वा सिद्धमन्त्रो न चेत् स्यात्
सप्तोपायान् शङ्करोक्तान् प्रयुंज्यात्।
एकैकेनैतेन मन्त्रे प्रयुक्ते
द्राक्सिद्धिःस्यात्तान्त्रिको ड़िण्डिमोऽयं ॥ ३२ ॥
भ्रामणं रोधनं वश्यमापीड़नं
पोषणं शोषणं दाहनं चेति तान्।
सप्त वच्ये क्रमा ल्लचणै र्लचयन्
येन सिद्धो भवे दिष्टमन्त्रो हठात् ॥ ३३ ॥
मनः शिलाकुङ्कुमचन्द्ररोचना
सचन्दनोशीरभवद्रवेण।
विलिखर यन्त्रं तदुपर्य्यथो लिखे-
न्मनुस्थवर्णान् ग्रथितान् सुधाच्चरैः ॥ ३४ ॥
ततः चिपेत्तल्लिखितं घटोदरे प्रायो जलचौद्र-गवाज्य-पूरिते।
यजे ज्जपे तत्र च होमयेन्मनुं स तेन हि भ्रामित आशु सिध्यति ॥३५
भ्रामितो यदि न सिध्यते मनुः पार्श्वयो स्तमथ मारवीजतः।
रोधयेत् किमथवा गिरा क्रिया तेन रुद्ध उपयाति सिद्धतां ॥ ३६ ॥

एतेनापि न सिध्यति यदि मनुः कुर्य्यात्ततोऽमुं वशं
कुष्टालक्तकरात्रिचन्दनशिलापंकेन (१) भूर्जत्वचि।
मन्त्रार्णांस्तु विलिख्य तच्च मदनेना (२) च्छाद्य कण्ठे सदा
गृह्णीयात् खलु तेन सिध्यति मनु र्मन्त्रस्य वश्योभवन् ॥ ३७ ॥

मन्त्रो न सिध्यति यदीतिवशंगतोऽपि (३)
तं पीड़येत् पुन रसौ विधिनाऽमुनैव (४)।
भंक्त्वा पदानि च मनो रधरोत्तरेण (५)
योगेन दैवत मपि स्मरतात्तथैव (६) ॥ ३८ ॥

जप्त्वाऽथ मन्त्र मभिलिख्य तलेऽविदुग्धे (७)
राक्रम्य दक्षिणपदाऽनुदिनं जुहोतु।
मन्त्रेण चेत्थ मधरोत्तरयोगभाजा
स्वाहादिकेन (८) हविषा जपतो दशांशम् ॥ ३९ ॥

मन्त्रश्चेत्थं पीड़ितो लज्जितः सन्
सप्ताहान्ते तस्य सिध्यत्यऽवश्यम्।
नोचेदेवं सिद्धि मायाति मन्त्रो
बालावीजैः पोषयेत् संनियोज्य ॥ ४० ॥

---

(१) रात्रिर्हरिद्रा, शिला मनःशिला।

(२) मधूच्छिष्टेन। (३) इति एवं प्रकारेण वशमानीतोऽपि।

(४) अनन्तर वक्ष्यमाणेन। (५) मन्त्रपदानिविलोमेनोक्त्वा।

(६) अधःशीर्ष मूर्द्ध्वपादं। (७) अर्कस्नुक्क्षीरेण ; मेषदुग्धेनेति केचित्।

(८) स्वाहा नारायणाय नमः, ओं, अथवा प्रणवं पूर्वमुपादाय मन्त्रोत्पादानां विलोमपाठः।

पूर्व्वं वीजं मन्त्रपूर्व्वे नियोज्य
पश्चादन्त्यं मध्यमं वा समस्तम् ।
क्षीरक्षौद्राभ्यां विलिख्यात्मपाणौ
धार्य्यो मन्त्रः पोषितः सिध्यति द्राक् ॥ ४१ ॥

नोचेदेवं शोषयेत्तं तथैव
संपुट्याथो वायुवीजद्वयेन ।
कण्ठे दध्यात् पूर्व्ववत्संलिखेद्द्राक्
सिद्ध स्तु स्यात् शोषितो वायुनाऽसौ ॥ ४२ ॥

सिद्धःस्याद्यदि शोषितोऽपि न मनु स्तं वह्निवीजैर्द्दहे-
दूर्द्ध्वाधोऽन्तपुर श्चतुर्भि रनलैः (१) संवेष्ट्य मन्त्राक्षरान् ।
तैलैर्म्लातरूद्भवैः (२) क्रमगतान् संलिख्य भूर्जादिके
दध्यात् कण्ठतटे स तेन सहसा दग्धो मनुः सिध्यति ॥ ४३ ॥

शङ्करेण पूर्व्व मुक्त मित्युपायसप्तकं
दुष्टमन्त्रसिद्धिहेतु रत्र नास्ति संशयः ।
कथ्यतेऽथ सिद्धिमूल मद्भुतं महौषधं
यत्प्रयोगमात्रकेण सर्व माशु साधयेत् ॥ ४४ ॥

आनीय मूल मवकृष्य सुवर्णपुष्प्याः (३)
पिष्ट्वा जलेन मसृणं गलहृल्ललाटे ।
लिम्पन् मनुं यदि जपे द्द्रुत (४) मेति सिद्धिं
क्षेषणं च पश्यति दृशा विदधे किमन्यत् ॥ ४५ ॥

---

(१) मंत्राक्षराणां ऊर्द्ध्वाधः पुरः पश्चाच्च तुर्भीरंबीजे र्वेष्टनं कृत्वेत्यर्थः ।
(२) भल्लातकसंभूतैः पलाशपादपोत्थै रिति केचित् ।
(३) तन्नामक महौषधमेदस्य । (४) दृढ़मिति (घ) पुस्तके पाठः ।

जीवन्मुक्तः स भवति पुन र्यत्र कुर्य्याद्धियासां
पाताले वा दिवि च भुवि वा तत्क्षणं तत्प्रयाति।
उक्ता स्वेते मुनिजनमता मन्त्रसिद्धे रुपाया
एभिः सिद्धो न भवति मनु र्वाक्य मेत न्न वाच्यम् ॥ ४६ ॥
अथवाऽन्यविधानत श्चरे दसमर्थो मनुजः पुरश्क्रियाम्।
ग्रहणे शशिनोऽथवा रवे रकृतप्रागशनप्रतिग्रहः (१) ॥ ४७ ॥
समुद्रगायां (२) सरिति ग्रहे सति
प्रगाह्य नाभिद्वयसि (३) स्थितो जले।
जपे द्विमोचान्त मनन्यमानसो
मनुं च संख्या मवधार्य्य चेतसा ॥ ४८ ॥
दुर्य्यादोभि (४) र्दूषिता स्या न्नदी चे-
त्तर्ह्यन्यस्मिन् पुष्करिण्यादितोये।
स्नात्वा मन्त्रं संजपे दङ्गुलीभि
र्नास्मिन् कुर्य्यादासनस्थानचर्च्चाम् ॥ ४९ ॥
ततो दशांशं हुततर्पणादिकं
विधाय गुर्व्वर्च्चन मत्र पूर्व्ववत्।
ततः सुसिद्धोऽस्य भवेन्मनुः स्वयं
स्वयंभुवोक्तोऽय मरुशयो विधिः ॥ ५० ॥

---

(१) अशनं च प्रतिग्रहश्च अशन प्रतिग्रहौ, न कृतौ प्राक् अशनप्रतिग्रहौ येन तथाविधः।

(२) समुद्र गत्यामिति (घ) पुस्तके पाठः सोऽप्येतदर्थकः।

(३) नाभि प्रमाणे। (४) दुष्ट जलजन्तुभिर्म्मकरादिभिः।

एवं सिद्धमनो मनोऽभिलषिताः स्युः सिद्धयः सर्वत-
स्ता एवोत्तममध्यमाधमतया नृणां भवन्ति त्रिधा ।
तेषा मुत्तमसिद्धिमा न्न कमपि व्यापार मालम्बते
तत्त्वं (१) मध्यमसिद्धिमानभिलषत्यऽन्यस्तु कामान् बहून् ॥ ५१ ॥

अयत्नतो वाञ्छितसिद्धि रञ्जसा
सुखं सुराणां सविलासदर्शनम् ।
षड् र्म्यभावं (२) परमृत्युवञ्चनं
मतं नृणा मुत्तमसिद्धिलक्षणं ॥ ५२ ॥

परकायपुरप्रवेशनं (३) प्रसभं खेचरलोकमेलनम् ।
अवनं दिविषद्गिरां क्षितौ कथितं मध्यमसिद्धिलक्षणम् ॥ ५३ ॥

क्षितिवाहनभूषणादिलाभो
नृपलोकप्रियता च वाक्यसिद्धिः ।
कविता सुतसंपदाढ्यभावो
दृढताऽङ्गे (४) ऽधमसिद्धिचिह्न मेतत् ॥ ५४ ॥

निष्कामः किमपि न कांक्षते मनीषी
संप्राप्तोपशमतया (५) स मुक्ति मेति ।
काम्यानि स्पृहयति दुर्लभानि कामी
तत्सिद्ध्यै कतिचन दर्शयाम्युपायान् ॥ ५५ ॥

---

(१) तत्त्वज्ञानं, उत्तमसिद्धि मत्वंवा ।
(२) क्षुधत्वादीना मभावं ।
(३) परकाये परपुरे च प्रवेशनं ।
(४) अङ्गे अशिथिलता ।
(५) रागद्वेषादिविक्षउपशमः ।

काम्यानां सुतवित्तगोजययशोविद्यद्विषट्कर्म्मणां
मन्त्राणां विनियोगपूर्वकजपाः स्युः सर्वतः सिद्धये ।
तत् (१) कृत्वा विनियोग मीप्सितफलावाप्त्यै जपादींश्चरेत्
नैव स्याद्यदि सिद्धि राशु तदिह प्रायः प्रयोगांश्चरेत् ॥ ५६ ॥
ससंपुटं ग्रस्तसमस्तसर्वतोवृतं विदर्भं ग्रथितं विदर्भितम् ।
सगर्भितं मुक्तिविदर्भितं पुन स्तथावृतं च ग्रथितं ततः परम् ॥ ५७ ॥
आक्रान्तमाद्यन्तमितिद्विषड्धा
मन्त्राः प्रयोज्याः खलु काम्यसिद्ध्यै ।
यत्कर्म्मसिद्धाविह यः प्रयोगः
प्रयोजनीयः कथयामि सर्वम् (२) ॥ ५८ ॥
आदावन्ते मन्त्रमुल्लिख्य मध्ये
साध्याभिख्यां संपुटं ज्ञेय मेतत् ।
पूजाजापाभ्यासतः शान्तिपुष्टि-
त्रैलोक्यैकैश्वर्य्यकृत् स्या न्नराणाम् ॥ ५९ ॥
मन्त्रं कुर्य्यादर्द्धमर्द्धं द्विभागं मध्ये साध्यं वाक्यवत् (३) स्थापयित्वा ।
ग्रस्तंचैतद् योजयेच्चाभिचारे तेनाभीष्टं साधयत्येव मन्त्री ॥ ६० ॥
पूर्वं कृत्वा साध्यकर्माभिधानं (४) पश्चाद्बूयान्मन्त्रमेतत् समस्तम् ।
शीघ्रं शत्रूच्चाटने योजनीयं मन्त्रं कृत्वा पूजयित्वा जपेत्तत् ॥ ६१ ॥

---

(१) तस्माद्धेतोः। (२) तत्प्रकारं।
(३) क्रियाकारकादिन्यासेन वाक्यं रचयित्वेत्यर्थः।
(४) द्वितीयान्तं साध्यपदमुक्त्वापश्चात् समग्रमन्त्रं पठेत्।

मन्त्रं (१) द्विशः प्रथमतो विनियोज्य चान्ते

भूय स्त्रिवार मिह साध्यपदं च मध्ये ।

कृत्वा सकृद् यदि तदाऽखिल मृत्युहारी

स्यात् सर्वतोभ्रतमिदं सुभगत्वकारी ॥ ६२ ॥

प्रत्येकं (२) मन्त्रवर्णाननुगतमनुना संपुटीकृत्य सर्वा-

नादावन्ते च मन्त्रं पुनरपि विलिखेत् पञ्चमोऽसौ प्रयोगः ।

नाम्नाऽऽख्यातो विदर्भग्रथित इति महामृत्युरोगापहारी

सर्वैश्वर्यप्रदायीःनृपजनवश्य कृदुष्टकृत्यापहर्त्ता (३) ॥ ६३ ॥

द्वौ द्वौ विभज्याऽखिलमन्त्रवर्णान्

मध्येऽथ साध्याक्षर मेकमेकं (४) ।

नियोजये त्तत्तु विदर्भितं स्या

दुष्टापहं वश्यकरं विशेषात् ॥ ६४ ॥

आदावन्ते मन्त्र मुक्त्वा त्रिवारं मध्ये साध्यं विन्यसे द्विस्त्रिशो वा ।

एतत् प्रोक्तं गर्भितं शस्यते तत्कृत्यं वश्ये मारणोच्चाटनादौ ॥ ६५ ॥

आद्यन्तमन्त्रावृतसाध्यसंज्ञां (५) कृत्वा लिखेत्वष्टतिमांस्त्रिपंक्तिं ।

भवेदिदं मुक्तिविदर्भितं तद्भूताद्यपस्मारगदा न्निहन्ति ॥ ६६ ॥

---

(१) साध्यपदस्यादौ मन्त्रं द्विरुच्चार्य्य पश्चाच्च त्रिरुच्चार्य्य जपेत् ।

(२) आदौ मन्त्रमुक्त्वा ततो मन्त्रवर्णान् प्रत्येकं तेन मन्त्रेण संपुटीकृत्य पश्चात् पुनर्मन्त्रं ब्रूयात् ।

(३) परकृताभिचारः कृत्या ।

(४) मन्त्राक्षर युग्ममध्ये साध्याक्षर मेकैकं विन्यस्य जपेदित्याशयः ।

(५) मन्त्रपुटितं साध्यनाम कृत्वा ।

स्वमन्त्राक्षराणि क्रमात् संविभज्य
त्रिधैकैकभागावसानेषु साध्यम्।
न्यसेद् यत्र तत्राहतं स्यात् परेषां
चमूहेतिनौघोगतिस्तम्भकारी (१) ॥ ६७ ॥
क्रमेण साध्याक्षरमेकमेकं मन्त्रावसानेष्वसकृन्नियुंज्यात्।
भवेत्किलैतद्ग्रथितं मनुष्ये राकर्षणे वश्यविधौ विधेयम् ॥ ६८ ॥
मन्त्राक्षरे रन्तरितं समन्तादावर्त्तवत् साध्यपदं यदि स्यात्।
आक्रान्तमेतत् कथितं समस्तस्तम्भक्रियोच्चाटनवश्यकारि ॥ ६९ ॥
मन्त्रं द्विरुक्त्वाऽथ तदादिमध्य-
प्रान्तेषु तत्साध्यपदं नियुञ्ज्यात्।
आद्यन्तमेतच्चरमं प्रयोगं
विद्वेषणे प्रीतिमतो (२) नियुञ्ज्यात् ॥ ७० ॥
एते प्रयोगाः किल नारदोक्ताः स्वकर्मसिद्धा विह संगृहीताः।
अन्यच्च षट्कर्मविदां मतं यत्तच्चाथ शास्त्रानुमतेन वक्ष्ये ॥ ७१ ॥
शान्तिं वश्यं स्तम्भनं देहभाजां
विद्वेषश्चोच्चाटनं मारणं च।
षट्कर्माणीत्येव मुक्तानि धीरै-
स्तेषां भेदाः कालिकादिव्यवस्थाः (३) ॥ ७२ ॥

---

(१) सेनायुधनौकानां बुद्धिगतिरोधकारी।
(२) एतं द्वादशतमं प्रयोगं मिथः स्निग्धयो र्विद्वेषणे प्रयुञ्ज्यात्।
(३) कालदेश पात्रसंदिकत विधानानि।

षट्कर्म्मयोग्यासनजप्यमालादिकं प्रसंगाद् यदिहोक्तमस्ति।
यच्चापि नोक्तं सकलं तदेकीकृत्याऽथ संगृह्य पृथग्वदामि॥ ७३॥

अहोरात्रं ह्येतत् प्रभवति सदा षष्टि घटिका
स्तदन्तर्वर्त्तन्ते दश दश घटीका तु ऋतवः।
वसन्त स्च ग्रीष्म स्तदनु किल वर्षा अथ शर-
त्तदन्ते हेमन्त स्तदनु शिशिरो भास्वदुदयात्॥ ७४॥

एकैकां घटिका मह्नि निश ममून्युद्यन्ति भूतान्यपि-
च्चित्यादीनि ततो भवन्त्यनुदिनं तत्संक्रमा द्वादश (४)।
किन्त्वेषामुदयः स्ववर्ष णि वहिः श्वासेन संलच्यते
प्राणः पिङ्गलयेड़या च सततं श्वासत्व मापद्यते॥ ७५॥

सोऽपूर्व्वा उदये ह्यधोवहति वार्वह्नौ स्तथोर्द्धं पुन
र्व्वायोस्तिर्य्यगथो नभः समुदये नासापुटात्सर्वतः।
वामे वाति च शान्तिमान् हिमकर स्तोव्रोऽशुमान् दक्षिणे
तौ लग्नानि समानि यत्र विषमान्येभिः क्रमात् क्रामतः (५)॥७६॥

भूतत्तूदय मित्थ मुक्तविधिना प्रागाकलय्योचितं
रुद्राशादिदिगानन स्त्वचि तथा पद्मादिबद्धासनः।
रत्याद्यर्च्चनपूर्वकं निजमनो यन्त्रे स्वदेवं स्मर-
न्मन्त्रं ठादियुतं जपन्ननुहुतैः शान्त्यादिकर्म्माचरेत्॥ ७७॥

---

(४) सूर्य्योदयमारभ्य अह्नि रात्रौ च तत्पञ्चभूतानि एकैकया घटिकयो दयन्ते ततस्तेषां द्वादशसंक्रमणानि भवन्ति इत्याशयः।

(५) समानि लग्नानि वृषकर्कटकन्या वृश्चिकमकरमीनाख्यानि चन्द्रः क्रामति। मेषादिविषमानितु सूर्य्यःक्रामतीत्यर्थः।

| | Rs. | A. |
|---|---|---|
| Clokavartika, (English), Fasc. 1-7, at Re. 1-4 each ... ... | 8 | 12 |
| * Crauta Sutra of Cankhayana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4; Vol. 4, Fasc. 1, at As. 10 each ... ... ... ... ... | 10 | 0 |
| Cri Bhashyam, Fasc. 1-3, at As. 10 each ... ... | 1 | 14 |
| Dana Kriya Kaumudi, Fasc. 1-2, at As. 10 each ... ... | 1 | 4 |
| Gadadhara Paddhati Kalasara, Vol. I, Fasc. 1-7, at As. 10 each | 4 | 6 |
| Ditto Acarasara, Vol. II, Fasc. 1-4 ... | 3 | 2 |
| Gobhiliya Grhya Sutra, Vol. I, at As. 10 each ... ... | 3 | 2 |
| Ditto Vol. II, Fasc. 1-2, at Re. 1-4 each ... | 2 | 8 |
| Gobhiliya Grhya Sutra, (Appendix) Gobhila Parisista ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... | 0 | 10 |
| Haralata ... ... ... ... ... | 1 | 14 |
| Karmapradipa, Fasc. 1 ... ... ... ... | 1 | 4 |
| Kala Viveka, Fasc. 1-7, at As. 10 each ... ... | 4 | 6 |
| Katantra, Fasc. 1-6, at As. 12 each ... ... ... | 4 | 8 |
| Kurma Purana, Fasc. 1-9, at As. 10 each ... ... | 5 | 10 |
| Kiranavali, Fasc. 1-2, at As. 10 ... ... ... | 1 | 4 |
| Madana Parijata, Fasc. 1-11, at As. 10 each ... ... | 6 | 14 |
| Maha-bhasya-pradipodyota, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12; Vol. III, Fasc. 1-10, at As. 10 each ... ... | 19 | 6 |
| Ditto Vol. IV, Fasc. 1-2, at Re. 1-4 each ... | 2 | 8 |
| Manutika Sangraha, Fasc. 1-3, at As. 10 each ... ... | 1 | 14 |
| Markandeya Purana, (English) Fasc. 1-9, at Re. 1 each ... | 9 | 0 |
| * Mimamsa Darsana, Fasc. 10-19, at As. 10 each... ... | 6 | 4 |
| Mugdhabodha Vyakarana, Fasc. 1-4, at As. 10 each ... | 2 | 8 |
| Nirukta, (2nd edition) Vol. I, Fasc. 1 at Re. 1-4 ... ... | 1 | 4 |
| Nyayavartika, Fasc. 2-6, at As. 10 each ... ... | 8 | 2 |
| Nityacarapaddhati, Fasc. 1-7, at As. 10 each ... ... | 4 | 6 |
| Nityacarapradipa, Vol. I, Fasc. 1-8, Vol. II, Fasc. 1-4, at As. 10 each ... ... ... ... ... | 7 | 8 |
| Nyayabindutika, Fasc. 1, at As. 10 each ... ... | 0 | 10 |
| * Nyaya Kusumanjali Prakaranam, Vol. II, Fasc. 1-3, at As. 10 each ... ... ... ... ... | 1 | 14 |
| Nyaya Vartika Tatparya Parisuddhi, Fasc. 1-2, at As. 10 each | 1 | 4 |
| Nyayasarah, Fasc. 1-7, at As. 10 each... ... ... | 2 | 0 |
| Padmawati, Fasc. 1-6, at Rs. 2 each ... ... ... | 12 | 0 |
| Prakrita Paingalam, Fasc. 1-7 at As. 10 each ... ... | 4 | 6 |
| * Paracara Smriti, Vol. I, Fasc. 2-8, Vol. II, Fasc. 1-6; Vol. III Fasc. 1-6, at As. 10 each ... ... ... | 11 | 14 |
| Paracara, Institutes of (English) at Re. 1 each ... ... | 1 | 0 |
| Pariksamukha Sutram ... ... ... ... | 1 | 0 |
| Prabandhacintamani (English) Fasc. 1-3 at Re. 1-4 each ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 ... ... ... ... | 3 | 12 |
| Ravisiddhanta Manjari, Fasc. 1 ... ... ... | 0 | 10 |
| Saddarsana Samuccaya, Fasc. 1-2, at As. 10 each ... | 1 | 4 |
| Samaraicca Kaha, Fasc. 1-5, at As. 10 each ... ... | 3 | 2 |
| Sankhya Sutra Vritti, Fasc. 1-4, at As. 10 each ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3, at Re. 1 each ... | 3 | 0 |
| Six Buddhist Nyaya Tracts ... ... ... | 0 | 10 |
| Sraddha Kriya Kaumudi, Fasc. 1-6 at As. 10 each ... | 3 | 12 |
| Sucruta Samhita, (English) Fasc. 1, at Re. 1 each ... | 1 | 0 |
| Suddhi Kaumudi, Fasc. 1-4, at As. 10 each ... ... | 2 | 8 |
| Sundarananadam Kavyam ... ... ... ... | 1 | 0 |
| Suryya Siddhanta, Fasc. 1-2, at Re. 1-4 each ... ... | 2 | 8 |
| Syainika Sastra... ... ... ... ... | 1 | 0 |
| * Taittreya Brahmana, Fasc. 11-25, at As. 10 each ... | 9 | 6 |
| * Taittirya Samhita, Fasc. 27-45, at As. 10 each ... | 11 | 14 |
| * Tandya Brahmana, Fasc. 10-19, at As. 10 each ... | 6 | 4 |

| | Rs. | As. |
|---|---|---|
| Tantra Vartika (English) Fasc. 1-10, at Re. 1-4 ... ... | 12 | 8 |
| † Tattva Cintamani, Vol. I, Fasc. 1-9; Vol. II, Fasc. 2-10; Vol. III, Fasc. 1-2: Vol. IV, Fasc. 1; Vol. V, Fasc. 1-5; Part IV, Vol. II, Fasc. 1-12, at As. 10 each ... ... | 23 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1-6; Vol. II, Fasc. 1, at As. 10 each ... ... ... ... | 4 | 6 |
| Tattva Cintamani Didhiti Prakas, Fasc. 1-5; at As. 10 each | 3 | 2 |
| Tattvarthadhigame Sutram, Fasc. 1-3, at As. 10... ... | 1 | 14 |
| Tirthacintamoni, Fasc. 1-3, at As. 10 each ... ... | 1 | 14 |
| Trikanda Mandanam, Fasc. 1-3, at As. 10 each ... ... | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5, at As. 10 each ... ... | 3 | 2 |
| * Upamita-bhava-prapañca-katha, Fasc. 1-2, 5-13, at As. 10 each ... ... ... ... ... | 6 | 14 |
| Uvasagadasao, (Text and English) Fasc. 1-6, at Re. 1 ... | 6 | 0 |
| Vallala Carita, Fasc. 1, at As. 10 ... ... ... | 0 | 10 |
| Varsa Kriya Kaumudi, Fasc. 1-6, at As. 10 ... ... | 3 | 12 |
| * Vayu Purana, Vol. I, Fasc. 3-6; Vol. II, Fasc. 1-7; at As. 10 each... ... ... ... ... | 6 | 14 |
| Vidhana Parijata, Fasc. 1-8; Vol. II, Fasc. 1 at As. 10 ... | 5 | 10 |
| Ditto Vol. II, Fasc. 2-5, at Re. 1-4 ... | 5 | 0 |
| Vivadaratnakara, Fasc. 1-7 at As. 10 each ... ... | 4 | 6 |
| Vrhat Svayambhu Purana, Fasc. 1-6 at As. 10 ... | 3 | 12 |
| Yogasastra, Fasc. 1-3 ... ... ... ... | 3 | 12 |

*Tibetan Series.*

| | | |
|---|---|---|
| Amarakosah ... ... ... ... | 2 | 0 |
| Bauddhastotrasangraha, Vol. I ... ... ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4, at Re. 1 each ... ... ... ... ... | 4 | 0 |
| Nyayabindu of Dharmakirti Fasc. 1 ... ... ... | 1 | 0 |
| Pag-Sam S'hi Tin, Fasc. 1-4 at Re. 1 each ... ... | 4 | 0 |
| Rtogs brjod dpag hkhri S'in ( Tib. & Sans. Avadana Kalpalata ) Vol. I, Fasc. 1-10, Vol. II, Fasc. 1-10 at Re. 1 each... | 20 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc 1-3; Vol. III, Fasc 1-6 at Re. 1 each ... ... ... | 14 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| Amal-i-Salih, or Shah Jahan Namah ... ... | 2 | 0 |
| Al-Muqaddasi (English) Vol. 1, Fasc. 1-4 at Re. 1 ... | 4 | 0 |
| Ain-i-Akbari, Fasc, 1-22 at Rs. 1 8 each ... ... | 33 | 0 |
| Ditto (English) Vol. II, Fasc. 1-5, Vol, III, Fasc. 1-5, Index to Vol. II, at Rs. 2 each ... | 22 | 0 |
| Akbarnamah, with Index, Fasc. 1-37 at Re. 1-8 each ... | 55 | 8 |
| Akbarnamah, English Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-7; Vol. III, Fasc. 1-2, at Re. 1-4 each ... ... | 21 | 4 |
| Arabic Bibliography, by Dr. A Sprenger at As. 10 ... | 0 | 10 |
| Conquest of Syria, Fasc. 1-9 at As. 10 each ... ... | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts 1-2 at Re. 1 each | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal, Fasc. 1-3 at Re. 1 each ... ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms and Appendix Fasc. 1-21 at Re. 1-8 each ... ... ... | 31 | [illegible] |
| Faras Nama, of Hashimi ... ... ... | 1 | [illegible] |
| Ditto of Zabardast Khan ... ... ... | 1 | 0 |

| | Rs. | A. |
|---|---|---|
| Farnang-i-Rashidi, Fasc. 1-14 at Re. 1-8 each ... ... | 21 | 0 |
| Fihrist-i-Tusi, or Tusy's list of Shy'ah Books, Fasc. 1-4 at Re. 1 each ... ... ... ... | 4 | 0 |
| Gulriz ... ... ... ... ... | 2 | 0 |
| Hadiqatu'L, Haq qat, (Text & Eng. ... ... | 3 | 8 |
| History of Gujarat ... ... ... ... | 1 | 0 |
| Haft Asman, History of the Persian Masnawi, Fasc. 1 at As. 12 each ... ... ... ... | 0 | 12 |
| History of the Caliphs, (English Fasc. 1-6 at Re. 1-4 each ... | 7 | 8 |
| Iqalnamah-i-Jahangiri, Fasc. 1-3 at As. 10 each ... ... | 1 | 14 |
| Isabah, with Supplement, 51 Fasc. at Re. each ... ... | 51 | 0 |
| Ma'asir-i-Rahimi, Part I, Fasc. 1-3 at Rs. 2 each ... ... | 6 | 0 |
| Maasir-ul-Umara, Vol. 1, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. III, Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 at Re 1 each ... | 35 | 0 |
| Ditto (Eng). Vol. I, Fasc. 1-2, at Re. 1-4 each ... | 2 | 8 |
| Memoirs of Tahmasp ... .. ... ... | 1 | 0 |
| Mathamu'L-Ilali 'L-Mu'dila, Fasc. 1-2 ... ... | 2 | 0 |
| Muntakhabu-t-Tawarikh, Fasc. 1-5 at As. 10 each ... | 9 | 6 |
| Ditto English, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 at Re. 1 each ... ... | 16 | 0 |
| Muntakhabu-l-Lubab, Fasc. 1-19 at As. 10 each ... ... | 11 | 14 |
| Ditto Part 3, Fasc. 1-2 at Re. 1 each ... | 2 | 0 |
| Nukhbatu-l-Fikr, Fasc. 1 ... ... ... | 0 | 10 |
| Nizami's Khiradnamah-i-Iskandari, Fasc. 1-2 at As. 12 each | 1 | 8 |
| Persian and Turki Divans of Bayran Khan, Khan Khanan | 1 | 0 |
| Qawaninu's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut.-Col. D. C. Phillott ... ... ... ... | 5 | 0 |
| Riyazu-s-Salatin, Fasc. 1-5 at As. 10 each ... ... | 3 | 2 |
| Ditto (English) Fasc. 1-5 at Re. 1 ... | 5 | 0 |
| Shah Alam Nama ... ... ... ... | 1 | 0 |
| Tadhkira-i-Khushnavisan ... ... ... | 1 | 0 |
| Tubaquat-i-Nasiri (English), Fasc. 1-14 at Re. 1 each ... | 14 | 0 |
| Ditto Index ... ... ... | 1 | 0 |
| Tarikh-i-Firuz Shahi of Ziyau-d-din Barni, Fasc. 1-7 at As. 10 each ... ... ... ... ... | 4 | 6 |
| Tarikh-i-Firuzshahi, of Shams-i-Siraj Aif, Fasc 1-6 at As. 10 each ... ... ... ... ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1-2 at Re. 1-8 each ... | 3 | 0 |
| The Mabani'L Lughat A Grammar of the Turki Language in Persian ... ... ... ... | 1 | 8 |
| Tuzuk-i-Jahangiri (English) Fasc. 1 at Re. 1 ... ... | 1 | 0 |
| Wis o Ramin, Fasc. 1-5 at As. 10 each ... ... | 3 | 2 |
| Zafarnamah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 at As. 10 each ... ... ... ... ... | 10 | 10 |

---

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | Rs. | A. |
|---|---|---|---|
| 1. | ASIATIC RESEARCHES Vol XX at Rs. 10 each ... | 10 | 0 |
| 2. | PROCEEDINGS of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) at As. 8 per No. | | |
| 3. | JOURNAL of the Asiatic Society for 1875 (8), 1871 (7), 1872 (8), 1873 8, 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 8, 1881 7), 1882 (6, 1883 (5), 1884 (6), 1885 (6) 1886 (8, 1887 (7, 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8, 1898 (8), 1899 ( ), 1900 (7), 1901 7), 1902 (9), 1903 8), 1904 (16) at R 1-8 per No to Members and at Rs. 2 per No to Non-Members. | | |

N. B.—*The figures enclosed in brackets give the number of Nos, in each year.*

| | | | |
|---|---|---|---|
| 4. | Journal and Proceedings. N. S., (Nos. 1-4 of 1905 are out of stock), 1905 (10), 1906 (10), 1907 (11), 1908 (11), 1909 (11), 1910 (11), 1911 (11), at Re 1-8 per No. to Members and Rs. 2 per No. to Non-members. | | |
| 5. | Memoirs, Vol. I (21), Vol. II (11), Vol. III (4), Vol. IV (1) Price varies from number to number. Discount of 25 per cent to Members. | | |

N. B.—*The figures enclosed in brackets give the number of Nos. in eac Volume.*

| | | | |
|---|---|---|---|
| 6. | Centenary Review of the Researches of the Society from 1784-1883 ... ... ... | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society Bengal, 1910 ... ... ... ... | 8 | 0 |
| 8. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I III, with 8 coloured Plates, 4 to at Rs. 6 each ... ... | 18 | 0 |
| 9. | Kachuracabdamr a, Parts I and II at R 1 8 ... | 3 | 0 |
| 10. | Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmadi-Kirmani, and edited with notes by Major D. C Phillott ... ... ... | 10 | 0 |
| 11. | A sketch of Turki language as spoken in Eastern Turkistan (Extra No. J A.S B. 1878) ... ... | 4 | 0 |
| 12. | Materials for a Flora of the Malayan Peninsula, Nos. 16, 17, 18 Vol. 74, Part I, J A.S B 1905) ... ... | 4 | 0 |
| 13. | Do. No. 19 (Vol. 74, Part 2, J.A S.B 1908) | 3 | 0 |
| 14. | Index to Punjab Notes and Queries, Indian and North Indian Notes and Queries (Extra No. J.A S.B. 1908) | 2 | 0 |
| 15. | A Grammar and Dictionary of the Kanawari Language (Extra No. J A.S.B 1909) ... ... | 3 | 0 |
| 16 | Introduction to the Maithili Dialect of the Bihari Language as spoken in North Bihar (Extra No. 2 J A S.B. 1909) ... ... ... ... | 5 | 0 |
| 17. | Numismatic Supplement No. 16 ... ... | 0 | 8 |
| 18. | Index to Rare Mughal Coins noticed in the Numismatic Supplement Nos. 1-15 ... ... ... | 0 | 4 |
| 19. | Tibetan Studies Being a reprint of the articles contributed to the J.A.S.B by Alexander Csoma de Koros ... | 2 | 0 |

---

| | | |
|---|---|---|
| Notice of Sanskrit Manuscripts, Fasc. 1-35 at Re. 1 each ... ... ... ... | 35 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... ... ... ... | 5 | 0 |

N.B.–All cheques, Money Orders, &c, must be made payable to the "Treasurer, Asiatic Society," only.

Books are supplied by V.P P.

BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NO. 1397.




# श्रीसूरिसर्वस्वम् ।

# SRI SURISARVASVAM.

BY

SRI GOVINDA KAVIBHUSANA SAMANTAROY

EDITED BY

SRI JAGANNATH MISRA

*Teacher of Logic, Sanskrit School, Puri.*

FASCICULUS III.

Calcutta.

PRINTED BY ABDUL GOFFUR AT THE NEW BRITANNIA PRESS

*7[illegible], Amherst Street*

AND PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL, 1, PARK STREET.

1914.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL

No. 1, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,

11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO

HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied,—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | A. |
|---|---|---|
| Advaitachinta Kaustubha, Fasc. 1-3 at As. 10 each ... | 1 | 14 |
| Aitareya Brahmana, Vol. I, Fasc. 1-5; Vol II, Fasc. 1-5; Vol. III, Fasc. 1-5 Vol. IV, Fasc. 1-8 at As. 10 each ... | 14 | 0 |
| Aitareyalocana ... ... ... ... | 2 | 0 |
| Amarakosha, Fasc. 1-2 ... ... ... ... | 4 | 0 |
| Anumana Didhiti Prasarini, Fasc. 1-3 at As. 10 ... | 1 | 14 |
| Astasahasrika Prajnaparamita, Fasc. 1-6 at As. 10 each ... | 3 | 12 |
| Atmatattvaviveka, Fasc. I ... ... ... | 0 | 10 |
| Acvavaidyaka, Fasc. 1-5 at As. 10 each ... ... | 3 | 2 |
| Avadana Kalpalata, (Sans. and Tibetan) Vol I. Fasc. 1-11 Vol. II, Fasc. 1-11 at Re. 1 each ... ... | 22 | 0 |
| Balam Bhatti, Vol. I Fasc. 1-2, Vol. II, Fasc. 1, at As. 10 each | 1 | 14 |
| Baudhayana Srauta Sutra, Fasc. 1-3; Vol. II, Fasc. 1-5 Vol. III, Fasc. 1, at As. 10 each ... ... ... | 5 | 10 |
| Bhasavritty ... ... ... ... ... | 0 | 10 |
| Bhatta Dipika, Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-2 at As. 10 each... ... ... ... ... | 5 | 0 |
| Bauddhastotrasangraha ... ... ... ... | 2 | 0 |
| Brhaddevata, Fasc. 1-4 at As. 10 each... ... ... | 2 | 8 |
| Brhaddharma Purana, Fasc. 1-6 at As. 10 each ... ... | 3 | 12 |
| Bodhicaryavatara of Cantideva, Fasc. 1-6 at As. 10 each ... | 3 | 12 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... ... | 1 | 14 |
| Catadusani, Fasc. 1-2 at As. 10 each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Book and MSS., Fasc. 1-4 at Rs. 2 each | 8 | 0 |
| * Catapatha Brahmana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 Vol. III, Fasc. 1-7; Vol. V, Fasc. 1-4 at As. 10 each ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 at Re. 1-4 each ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 at As. 10 ... | 3 | 2 |
| Ditio Vol. IX, Fasc. 1-2 ... ... | 1 | 4 |
| Catasahasrika-prajnaparamita, Part I, Fasc. 1-18 at As. 10 each | 11 | 4 |
| *Caturvarga Chintamani, Vol. II, Fasc. 1-25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1-10; Vol. IV, Fasc. 1-6 at As. 10 each... ... ... ... ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7, at Re. 1-4 each ... | 1 | 4 |
| Ditto Vol. IV, Fasc. 8-10 at As. 10 ... | 1 | 14 |
| Clokavartika, (English), Fasc. 1-7, at Re. 1-4 each ... ... | 8 | 12 |

शान्तिः कृत्यामयार्त्तिग्रहभयशमनं यस्तु तत् कर्त्तुकामो
हेमन्ते पञ्चमेऽंशे सलिलसमुदये शश्वदीशाननक्तः।
गोत्वक् शुक्लाम्बरस्योपरि शुचिमनसा वद्धपद्मासनस्थः
कुम्भे चावाह्य देवीं रति मथ स जपन् दर्शयेत् पद्ममुद्रां ॥ ७८ ॥
यन्त्रे चाम्भोरुहस्थे (१) मलयजलिखिते देव मावाह्य शुक्लं
साध्याख्यां मन्त्रवर्णान्तरविवरगता न्यस्य सम्यक् प्रपूज्य।
मन्त्रं जप्त्वा ठवीजान्वित मुदितपथा होम मापाद्य वृत्त-
कुण्डे कल्पोक्तद्रव्यै हितगुरुवचसा साधयेत् शान्तिकर्म्म ॥ ७९ ॥
वश्यं सज्जनताविधेयकरणं तत् कर्त्तुमिच्छु र्सुधी
र्ह्यास्योदय उत्तराननतया लाक्षियखड्गत्वचि (२)।
स्थित्वा स्वस्तिक आसने प्रथमतो वाणीं प्रपूज्या ऽग्रतो
मुद्रां प्राणमयीं प्रदर्श्य लिखिते गोरवनाया द्रवैः ॥ ८० ॥
यन्त्रे वह्निगृहान्विते (३) ऽरुणरुचिं देवं विचिन्त्यार्च्चये-
न्न्यस्त्वा मन्त्रलिपिद्वयान्तरगतान् साध्याक्षरा नेकशः।
मंत्रं चामृतवीजपूर्व (४) ममक्त ज्जप्त्वा तदन्ते हुतं
कुण्डे पद्मनिभे विधाय विधिव द्वश्यक्रियां साधयेत् ॥ ८१ ॥

(१) अर्द्धचन्द्राकार पद्माङ्कित मण्डलमध्यस्थे यन्त्रे तद्वैतत यन्त्रे।
(२) लाक्षारक्त यस्त्राहते गण्डकचर्म्मणि।
(३) त्रिकोणान्विते।
(४) वं बीजपूर्व्वकं।



सर्वेषां वृत्तिरोधः (१) खलु करणवतां (२) स्तम्भनं तच्चिकीर्षुः
शीषर्त्तौ (३) भूदये प्राक्कृतवदन इभत्वग्युते पीतवस्त्रे।
बद्धाऽसौ मर्त्त्यवीरासन मिह निवसन् पूजयित्वा रमां प्राक्
मुद्रां कृत्वा गदाख्यां रजनिविलिखिते भूगृहस्थे स्वयन्त्रे (४) ॥८२॥
पीताभं स्वेष्टदेवं सपदि परिचरन् साध्यनाम्नः पुरस्ता-
त्पश्चाच्च न्यस्य मन्त्रं पुन रवनियुतं (५) संजपेदिष्टमन्त्रं।
हुत्वा चाष्टास्रकुण्डे विधिवदवहिते वस्तुभिः कल्पशस्तै
स्तेन द्राक् सिद्धि मेति प्रसभ मविकलां स्तम्भनाख्यक्रियायाः॥ ८३॥
विद्वेषः प्रीतिविच्छेदन मतिनिविड़प्रीतिभाजो मिथः स्या-
त्तत्कारिष्ण्वस्तपर्त्तौ सति वियदुदये नैर्ऋताशाकृतास्यः।
फेरुत्वक् वभ्रुवस्त्रोपरि (६) सपदि वसन् कुक्कुटाख्यासनेन
प्राग् ज्येष्ठां पूजयित्वा मुषलविरचनां दर्शयित्वाऽथ देवं॥ ८४॥
मिश्राभं वेश्मधूमद्रवलिखितनभोमण्डलाच्छन्नयन्त्रे (७)
संपूज्याथादिमध्यान्तगतमनु (८) पुनः साध्यनामाऽभिलिख्य।
मन्त्रं जप्त्वा हमाद्यं (९) हुतमपि तनुया तत्र षट्कोणकुण्डे
योग्यै र्द्रव्यै र्यथावद्गुरुकथितपथा साधयेदित्थ मेतत् (१०)॥ ८५॥

---

(१) व्यापाररोधनं। (२) इन्द्रियवतां। (३) शिशिरर्त्तौ।
(४) चतुरस्राकृते। (५) लं बीजाद्यं।
(६) जम्बुकचर्मणि कपिलवस्त्रोपरि।
(७) वृत्ताकृते यन्त्रे।
(८) आदिमध्यान्तेषु गतोमनु र्मूलमन्त्रो यस्मिन्।
(९) हमिति बीजमाद्यं यस्य तं। (१०) विद्वेषकर्म।

स्यादुच्चाटन मात्मना ऽत्मविषयात् प्रभ्रंशनं तत्करो
वर्षासु श्वसनोदयेऽञ्जननिभे वस्त्रे च मेषत्वचि ।
स्थित्वा वायुदिगाननः प्रथमतः संबध्य वज्रासनं
दुर्गां तां परिचर्य्य वज्ररचनां संदर्श्य कृष्णत्विषं ॥ ८६ ॥
देवं वायुगृहावृतेऽथ लिखिते यन्त्रे चिताङ्गारत
स्तत्रावाह्य समर्च्य मन्त्रचरमे साध्यं लिखित्वा दधत् ।
मन्त्रं यंयुत मुच्चर न्नथ जपन् पञ्चास्त्रकुण्डे हुतं
कृत्वा वस्तुभि रत्र कल्पविहिते रुच्चाटनं साधयेत् ॥ ८७ ॥
प्राणिप्राणवियोजनं प्रसभतः स्यान्मारणं तस्य यः
कर्त्ताऽसौ दहनोदये च शरदि स्यात् पावकाशाननः ।
धूम्रे वाससि सैरिभत्वचि वसन् भद्रासनेना ऽर्च्चयन्
कालीं, खड्गमयीं (१) प्रदर्श्य रचनां देवं च धूम्रं स्मरन् ॥ ८८ ॥
यन्त्रे पिष्टविषाष्टकेन लिखिते हव्याशवेश्माङ्किते (२)
तत्रावाह्य समर्च्य साध्यचरमे (३) मन्त्रं लिखित्वा जपेत् ।
मन्त्रं रंयुत मत्र योग्यहविषा त्र्यस्त्रे षडस्त्रेऽथवा
सप्तास्त्रे किमु कुण्ड एव हवनं कुर्वन्निदं (४) साधयेत् ॥ ८९ ॥

---

(१) खड्गाकारां रचनां मुद्रामित्यस्येषान्वयः ।

(२) त्रिकोणावृते ।

(३) साध्यशेषे ।

(४) मारणं ।

श्वेतारुणानलतरुद्वयमूल (१) लोण
धूस्तूरकद्रव (२) कटुत्रयवेश्मधूमैः ।
ध्यानं विषाष्टक मसोभि रुपस्कृते स्या
द्वेषाऽभिचारकृतयन्त्रविलेखनादिः ॥ ८० ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिमर्वस्वे मन्त्रसिद्ध्युपाय-पुरश्चरणविधि र्नाम पञ्चदशः संग्रहः ॥ * ॥

षोड़शः संग्रहः ।

इत्थं प्रोक्तं पूर्वसेवाविधानं (३)
षट्कर्म्माणि प्रस्तुतानि प्रसङ्गात् ।
यत्कर्त्तव्यं वीत्तितैः सिद्धमन्त्रै
रन्येद्याश्च प्रोच्यते नैत्यिकं (४) तत् ॥ १ ॥
नित्येनैव हि कर्म्मणाऽखिलमिदं नैमित्तिकं पूर्य्यते
ताभ्यां सिध्यति काम्यकर्म्म सकलं भूय स्तथैभि स्त्रिभिः ।
प्रायश्चित्त मपीह सिध्यति चतुर्भि स्तै रुपास्तिक्रिया
नित्याचारवतां समाप्यत उभे ह्याद्यान्तिमे श्रेयसी (५) ॥ २ ॥

---

(१) श्वेत चित्रक मूलं रक्त चित्रक मूलं च ।

(२) धुस्तूरपत्र रसः ।

(३) पुरश्चरण विधिः ।

(४) नित्यानुष्ठानं ।

(५) नित्यानुष्ठानरतस्य नैमित्तिकत्वसाम्यात् प्रत्यवायपरिहारफलसाम्या-च्चागन्तुकनैमित्तिकग्रहदाहेष्ट्यादौ प्रवृत्तिः फलसिद्धिश्च सुलभा, ताभ्यां

तस्मादिष्टमतो कृपास्तिसहितः सर्वार्थसिद्धिप्रदो
नित्याचारविधिं विधीयत इह प्रात र्निशीथावधि (१) ।
आचाराद्धि भवत्यऽनाकुलतया धर्म्मोऽर्थकामौ तत
स्तौ चे द्विष्णुनिषेवणाय भवतो मोक्षेऽस्ति को वा श्रमः ॥ ३ ॥

अत श्चतुर्वर्गफलादिसाधनं
नरः सदाचारपथं समाश्रयेत् ।
सुखायुरारोग्यधनात्मजर्द्धिभिः
संयुज्य येन स्वय मश्नुतेऽमृतं (२) ॥ ४ ॥

स्नानं सन्ध्या जपो होमो देवार्च्चाऽतिथिसत्कृतिः ।
षड् विधं नित्यकर्म्मेदं कृत्वा ब्रह्मार्पणं चरेत् ॥ ५ ॥

जीवन् प्रेतः स्नानहीनो मनुष्य
स्तेषां (३) मध्ये यस्त्वऽसन्ध्यो द्विजः स्यात् ।
चाण्डालोऽसौ सर्वधर्मच्युतः स्या
न्नायं लोको नापर आस्ति तस्य (४) ॥ ६ ॥

---

चान्तःकरणमलापचये चार्थित्वसामर्थ्ययोरधिकारप्रयोजकयोः प्राप्तौ काम्यानुष्ठानतदपूर्वसिद्धि. । ततश्चाभ्युदयप्रवणतायां सत्यां तद्विघटकपापोपशमौत्सुक्यवशेन वस्तुतः प्रायश्चित्तानुष्ठानप्रसक्ति स्तेन चतुर्षु तत्तदनुष्ठानेष्वभिरतस्य निःश्रेयसपर्य्यवसायिन्या मुपास्तौ दुःखवर्ज्जुलादभ्युदयमार्गाद्व्यावृत्त्य चेतसः प्रवृत्ति-रात्यन्तिकी भवति इति नित्याचारवतामेवाभ्युदयनिःश्रेयसे भवत इत्याशयः ।

(१) प्रातरारभ्य निशीथपर्य्यन्तं ।

(२) मोक्षं । (३) स्नातानां ।

(४) सन्ध्याहीन द्विजन्मनः इहलोके परलोके वा श्रेयो नास्ति इत्यर्थः ।

कृतस्नानसन्ध्योऽप्यनिर्वर्त्त्य (१) नित्यं-
महापञ्चयज्ञा न भुञ्जीत (२) यस्मात् ।
अजस्रास्रपूयान्यह्वत्वा मलानि
स्वमांसान्यशिष्टेष्टदेवं स भुंक्ते ॥ ७ ॥
अतः क्रमेण स्वपरिश्रमेण
सारांश मादाय समस्तशास्त्रात् ।
सिद्धान्तितं यत्तदुपासनाङ्गं (३)
नित्यं तथा कर्म्म वितत्य वच्मे ॥ ८ ॥
अरुणरुगभिरामे यामिनीशेषयामे
जलजनिनदजुष्टे (४) दण्डषट्कावशिष्टे ।
सति भवति मुहूर्त्ते ब्रह्मण स्तत्र मन्त्री
सपदि विगतमोहो जागृयाद् योगयुक्तः ॥ ९ ॥
नीवीकुन्तलबन्धनं शिथिलितं स्याच्चे दृढं त चरन् (५)
भ्रूमध्यं निजनासिकाग्र मथवा पश्यन् समीरं दधत् ।
उत्थायाऽथ शनैः शनैः शयनतः पार्श्वेन वामेन त
त्तल्पान्ते निवसे न्निरस्य सहसाऽऽलस्यं विमृष्टेक्षणः ॥ १० ॥

---

(१) असमाप्य असम्पाद्येति यावत् ।

(२) न भुञ्जीत, भोजनं न कुर्य्यात् इति निषेधबलेन महापञ्चयज्ञानकृत्वा भोक्तु रनिष्टं सूच्यते, तच्चाग्रे प्रतिस्वं व्यक्तौ भविष्यति ।

(३) उपासनाया मुख्यमङ्गं ।

(४) पञ्चरव जृम्भिते ।

(५) निबध्नन् ।

निरलसमनसा निरस्तनिद्रो
नरहरिनिर्म्मलनामधेयकीर्त्तिः।
निजमनु (१) मनुचिन्तयं स्तदङ्गा-
न्यपिच पदाम्बुजतः स्मरेत् शिरोऽन्तं ॥ ११ ॥
तरणिदलसनाथे (२) शक्रगोपारुणेऽथो
रविशशिशिखिविम्बप्रस्फुरच्चारुमध्ये (३)।
हृदयसरसिजे ऽमुं कोमलश्यामलाङ्गं
सुसुख मुपनिविष्टं संस्मरे द्वासुदेवं (४) ॥ १२ ॥
पादाम्भोजद्वयेऽङ्गुल्यमलकिशलये सावलौ सन्नखानां
तत्कूर्मोदारकान्तौ प्रपदयुजि (५) लसज्जंघिकाद्गण्डयो श्च।
जान्वोरूर्वोः पिशङ्गे नववसनवरे मेखलादाम्नि नाभौ
रोमावल्या मुदारोदरभुवि विपुले वक्षसि प्रौढ़हारे ॥ १३ ॥
श्रीवत्से कौस्तुभे च स्फुटममललसद्दृन्दसद्दाम्नि वाह्वो
र्मूले केयूरदीप्ते जगदवनपटौ दोर्द्वये कङ्कणाढ़्ये।
पाणिद्वन्द्वाङ्गुलिस्थे सुमधुररवसंलीनविश्वे (६) च वेणौ
कण्ठे सत्कुण्डलस्रग्रुचिरुचिरकपोलस्थलद्वन्द्वके च ॥ १४ ॥

---

(१) स्वमन्त्रं।  (२) द्वादशदल संयुक्ते।

(३) सूर्य्यचन्द्राग्निमण्डलवत् प्रस्फुरत् चारु मध्यं मध्यभागो यस्य तादृशे।

(४) इदमुपलक्षणं शङ्करादीनां। तेन यं य मुपास्ते तं तं देवं चिन्तये-दित्यर्थः पर्य्यवसितः।

(५) पादाग्रयुग्मे।

(६) सुमधुररवेण संलीनं विश्वं यस्य तादृशे।

कर्णद्वन्द्वे सुघोणे नयननलिनयो र्भ्रूविलासे ललाटे
केशेष्वाऽऽलोलवर्हेष्वतिसुरभिमनोज्ञप्रसूनोज्ज्वलेषु ।
शोणे विन्यस्तवेणा वधरकिशलये दन्तपंक्त्यां स्मिताख्य-
ज्योत्स्नाया मादिपुंसः क्रमत इति शनैः स्वं मनः संनिधत्तां ॥ १५ ॥

यावन्मनो विलय मेति हरे रुदार-
मन्दस्मिते स्मरतु तावदनङ्गवीजं ।
लीने मनस्यवयविन्यखिलात्मभूते
तस्मिन् प्रसन्नमहसि स्वयमच्युतः स्यात् ॥ १६ ॥

सद्यो दुकूलपिहितास्यपवित्रपात्रे-
णानीतनीरनिकरेण करेण पूर्वं ।
प्रक्षाल्य पाणिमुखपाद मथ क्रमेण
गण्डूषकै स्तदनु तुण्डमपि प्रमृज्यात् ॥ १७ ॥

सहस्रदलसम्मिते सरसिजे स्वमूर्द्धि स्थिते
शशाङ्कशतशोभिते सकलतत्त्वमत्वाश्रिते ।
अशेषजगदीशितुः परमधाम्नि (१) विद्यात्मनः
प्रमोदभरनिर्भरे (२) स्थित मनुष्णशीते (३) ततः ॥ १८ ॥

वराभयकरं स्फुरत् शरदमन्दचन्द्रायुत-
प्रकाश ममलेक्षणं विशदवाससोद्भासितं ।
सुगन्धकुसुमस्रजा विमलचन्दनै श्चर्चितं
तथैव परमात्मनो गुरु मभिन्नरूपं स्मरेत् ॥ १९ ॥

(१) विष्णुरूपिणः परमेशस्य परमस्थाने ।
(२) परमानन्दनिविडे ।
(३) शीतोष्णरहिते ।

तदङ्कविनिविष्टया रजतपिण्डपाण्डुश्रिया
विचित्रवसनस्रगाभरणचन्दने र्जुष्टया।
वराभयकराग्रया स्वपतिसेवनव्यग्रया
यजेच्च सहितं स्त्रिया विधिवदान्तरोपायनैः (१) ॥ २० ॥
चित्यात्मने स्वगुरवे कलयामि गन्धं
व्योमात्मने च कुसुमं मरुदात्मने च।
धूपं, च दीप मनलात्मन एव हृद्यं
तोयात्मने वहुनिवेद्य मथाचमं च ॥ २१ ॥
गुरोऽप्यवहित: स्वयं मम गृहाण पूजां कृतां
कृतार्थय कृतांहसं सपदि सुप्रसन्नो भव।
त्वदीयचरणाम्वुजं शरण मस्तु दुर्मेधस
स्तमश्छकितचक्षुषो मम भवाम्वुधौ मज्जत: ॥ २२ ॥
तत: सुप्रसन्नं गुरुं भावयित्वा
परामोदपूरे मन: प्लावयित्वा।
क्रिया साङ्गिकीं कर्त्तु माज्ञापयित्वा
पुराणोक्तवादै: प्रणामं च कुर्य्यात् ॥ २३ ॥
अपश्यतो मे परमार्थरूप मज्ञानगाढ़ान्ध्यविनष्टदृष्टेः।
तस्मीलितं ज्ञानमयाञ्जनेन येनाक्षि तस्मै गुरवे नमोऽस्तु ॥ २४ ॥
व्याप्नोति विश्वं बहिरन्तरेकोऽप्याकाशवद् य: परिपूर्णमूर्त्तिः।
तस्येश्वरस्यैव पदं च मां यो ह्यदीदृशत्तं गुरु मानतोऽस्मि ॥ २५ ॥

---

(१) मानसोपचारैः।

यं सर्वदेवात्मतया स्मरन्तः सर्वेऽपि सर्वाभिमतं लभन्ते ।
तं श्रीगुरुं श्रीपरमं गुरुं च परापरं चापि गुरुं प्रपद्ये ॥ २६ ॥

गुरुरेव हरि र्गुरुरेव हरो गुरुरेव विधि र्गुरुरेव जगत् ।
गुरुरेव परापरतत्त्वमय स्त मथ प्रथमं प्रयजे मनुजः ॥ २७ ॥

इति गुरुयजनं विधाय विद्वान्
विषयपथा द्विनिवर्त्तिताक्षवर्गः ।
बहिरिव मह आन्तरं दिदृक्षुः (१)
स्थिरवपु रात्तसरोरुहासनः (२) स्यात् ॥ २८ ॥

मूलाधारे त्रिकोणे तरुणतरणिभाभासुरं विभ्रमन्तं
कामं (३) बालार्ककालानलजरठकुरङ्गाङ्क (४) कोटिप्रकाशं ।
विद्युन्मालासहस्रद्युति मचिरहसद्वन्धुजीवाभिरामं
त्रैगुण्यक्रान्तविन्दुं (५) जगदुदयलयैकान्तहेतुं विचिन्त्य ॥ २९ ॥

तस्योर्द्ध्वं विस्फुरन्तीं (६) स्फुटरुचिरतडित्पुञ्जभाभासुराभा
मुद्गच्छन्तीं सुषुम्णाऽध्वनि मनुमहसा माललाटेन्दुविम्वं ।
चिन्मात्रां सूक्ष्मरूपां कलितसकलविश्वां कलानादगम्यां
मूलं शब्दप्रवृत्ते रखिलजलरुहां च स्मरेत् कुण्डलीं तां ॥ ३० ॥

(१) आन्तरं महः वहिरिव द्रष्टुमिच्छुः ।

(२) बद्धपद्मासनः । (३) कामबीजं ।

(४) जरठकुरङ्गाङ्कः पूर्णचन्द्रः ।

(५) गुणत्रयेणाक्रान्तो विन्दुर्येन ।

(६) तं वेष्टयित्वेति वक्तव्यः ।

आधारात्लिङ्गपद्मे तदुपरि मणिपुराम्बुजेऽनाहताख्ये
कण्ठाब्जे भ्रूयुगान्ते क्षण मपि च समुद्गच्छता (१) मारुतेन।
स्थित्वा स्थित्वा सहस्रच्छदसरसिरुहे सङ्ग मामाद्य सद्यो
निः सङ्गस्यादिपुंस स्तदुभयमहसा (२) मण्डलं पूरयन्तीं ॥ ३१ ॥
तत्रत्याच्चन्द्रबिम्बा दखिललिपिमयीं रक्तपीयूषवृष्टिं (३)
संस्राव्याप्लाव्य चक्राण्यथ सपदि तया गच्छतीं पूर्वरीत्या।
स्थित्वा धाम्नि स्वकीये स कमल ममलं मन्मथं प्लावयन्तीं
निर्यान्तीभिः सुधाभिः पुनरपि मनसाऽमन्दधीः संदधीत ॥ ३२ ॥
यावज्जागर्त्ति देवी जगदुदय परित्राण संहारकर्त्री
तावत् सर्वे हि मन्त्रा दिन मनु जपतो हन्त सिद्ध्यन्ति पुंसः।
तस्मान्नित्यं प्रभाते प्रसभ मसुयमैनैत्य माहेयमूर्त्तिं (४)
सुप्तां मार्द्दवित्तवृत्त्या वलयितवपुषं वोधये द्वोधरूपां ॥ ३३ ॥
योऽभ्यस्यत्यनुदिन मेन मात्मनोऽन्त
र्जित्वेशं दुरितजरापमृत्युरोगान्।
जित्वाऽसौ स्वयमिव मूर्त्तिमाननङ्गः
संजीवे च्चिर मतिनीलकेशजालः ॥ ३४ ॥

---

(१) ऊर्द्ध्वंधावता।

(२) स्वतेजसा मन्त्रतेजसाच।

(३) रक्तवर्णां पीयूषवृष्टिं।

(४) अहेः सम्बन्धिनीं सर्पाकारामिति भावः।

स्फुटमधुरपदार्स्य श्रेणि रत्यद्भुतार्था
झटिति वदनपद्मा न्निःसरत्यस्य वाणी।
अपिच सकलमन्त्रा स्तस्य सिध्यन्ति मंक्षु (१)
व्युपरमघनसौख्यैकास्पदं (२) वर्त्तते सः॥ ३५॥
ये वृद्धा यौवनाढ्या (३) ऋणहतमहस (४) श्छन्नरुद्रादिदुष्टा (५)
ये क्लीवा वैरिणश्चा (६) ष्टमनिधनगता (७) वीर्य्यहीनाश्च यमाः।
ध्यानेनानेन पुंसः प्रसभ मविकलं ध्यातु रेतेऽपि सर्वे
मित्राः सिध्यन्ति सद्यः करकलितगुणाक्रान्तवाणानुकल्पाः॥ ३६॥
भ्राम्यन्मूर्त्तिं मूलचक्रे ह्यनङ्गं स्वाभि र्भाभी रक्तपीयूषस्रग्भिः।
विश्वाकाशं पूरयन्तं विचिन्त्य प्रत्यादेश्या स्तस्य वश्याय साध्याः॥३७॥
नार्य्यो नरा वा नगरी सभाऽपिवा
प्रवेशिता स्तत्र निशातचेतसा।
स्युः किंकरा स्तस्य झटित्यनारतं
चिराय तन्निघ्नधियो (८) न संशयः॥ ३८॥

---

(१) झटिति।

(२) विगत उपरमो निवृत्ति र्यस्मात्तादृशं घनं निविड़ं सौख्यमानन्द स्तस्य एकमास्पदं सचित्यर्थः।

(२) अत्र "मंक्षुब्धपरमघनसौख्यैकास्पदमिति क्वचित् पाठः"। तत्रच मंक्षुब्धं उद्वेलितं यत् परमं निविड़ं सौख्यं तस्य एकमास्पदमिति समासः।

(३) यौवनगर्व्विताः। (४) ऋणेन हृततजस्काः।

(५) छन्नरुद्रादिदोषयुक्ताः। (६) मित्रारिचक्रे शत्रुघटस्थगताः।

(७) राशिचक्रे अष्टमकोष्ठे नक्षत्रचक्रे च सप्तम कोष्ठे स्थिताः।

(८) तस्यायत्ताधीर्येषां ते।

अजपाजप मारभेत तस्मिन्
य मनुश्वास मनुस्मरन्ति जीवा: ।
स च जीवमनु मंतो मुनीन्द्रै
रजपाख्य: (१) किल तस्य रक्षकत्वात् ॥ ३८ ॥

सविन्दुसर्गाम्बरभार्गवाक्षरस्वरूप (२) एष द्विलिपि र्मनु र्मत: ।
स चे द्विलोमिन च पठ्यते पुन र्भवेद्विवस्म : परमात्मनो मनु: ॥ ४० ॥

जीवात्मानं सोऽप्युपास्ते परात्मा
तं वै जीवोऽन्योऽन्यत स्तौ ह्युपास्यौ ।
ईशो ब्रूतेऽहं स इत्येव जीवं
जीवो ब्रूते सोऽह मुद्दिश्य चैनं ॥ ४१ ॥

मुनौ हंसौ स्यातां परमपरपूर्वौ तदुभयो:
क्रमा न्मन्वो श्छन्दो निगमजननी चात्मपरमौ ।
तयोर्देवौ, वीजं प्रथम मपरं शक्ति रमुनो
र्नियोगो निश्वासाध्वनि जपविधाने निगदित: ॥ ४२ ॥

अनाहतसरोरुहोपरि हृदम्बुजं शोणितं
वसुच्छद मसुस्थलं स्मरतु तत्र जीवं स्थितं ।
विशुद्धकनकप्रभं विमलहंसराजाकृतिं
पदानयति (३) चैककेन स वसन् विलग्नै रह: ॥ ४३ ॥

---

(१) अजं जीवं पातीतिव्युत्पत्तेरित्याशय: ।

(२) बिन्दुविसर्गसहितौ अम्बरभार्गवाक्षरौ हकारसकारौ स्वरूपं यस्य तादृश: ।

(३) एकैक पादेन तिष्ठन् येन पादेन तिष्ठति उद्धृतां ज्ञाननाडिं वहति ।

प्रागादिदिग्दलगतः स महामरालो
नानाविधां वितनुते (१) मतिं मात्मनैव ।
पूर्वे दले (२) सुकृतकर्म्मणि, (३) वह्निपत्रे
निद्रालसत्वविषये यमदिग्दले (४) च ॥ ४४ ॥

क्रौर्य्ये, ऽथ नैऋतदलेऽनृतपापकृत्ये,
क्रीड़ासु पश्चिमदले, ऽनिलगे गतादौ ।
सौम्ये (५) रतिप्रणयकर्म्मणि, शैवपत्रे (६)
द्रव्यार्जने, जलजमध्यगतो विरक्तौ (७) ॥ ४५ ॥

जागर्त्ति केशरगतः, स च कर्णिकान्तः
स्वप्नं प्रसुप्तइव सं लभते सुषुप्तिं ।
सार्द्धं तदेन्द्रियगणै र्मनसि प्रलीने
स्वद्योतिताखिलभगः सुखरूप आस्ते ॥ ४६ ॥

जहाति यदि पङ्कजं परमपूरुषं सोऽयते
तदैति स तुरीयतां सपदि निष्क्रियो निर्गुणः ।
पुनः प्रकृतिजा द्वलाद् यदि निजालयं (८) सेवते
तथैव विविधां मतिं विदध दिन्द्रियैः खेलति ॥ ४७ ॥

---

(१) तत्र पूर्व्वादिपत्रेषु वर्त्तमानः सन् स महामरालो जीवः नानाविध बुद्धिमाधत्ते इत्यर्थः । (२) स्थितः सन् इत्यनुषङ्गः ।
(३) मतिं करोतीत्यनुषङ्गः एवमग्रेऽपि । (४) दक्षिणपत्रे ।
(५) उदक्पत्रे । (६) ईशानदले । (७) वैराग्ये ।
(८) स्वद्योतिताखिलैश्वर्य्यं स्वस्थानभूतपद्मं ।

इत्थं प्रसङ्गात् कथितं मयेह, जीवस्वरूपं श्रुतिवाङ्मतेन (१) ।

वच्मि स्वरूपं परमात्मन श्च द्वयोः सुपर्णत्व (२) मुदीरितं यत् ॥ ४८॥

भ्रूचक्रोपरिपङ्कजोदरगतं तद्द्वादशान्ते पदे

हंसाभं परमात्मपूरुष मतिस्निग्धं शशाङ्कच्छविं ।

तिष्ठन्तं चरणद्वयेन दधतं दोर्भ्यां वरं चाऽभयं

मान्द्रानन्दसुधाब्धिमग्न मखिलान्तर्यामिणं भावयेत् ॥ ४९ ॥

मुन्यादि विन्यासन मेव मादौ

विधाय तज्जीवमनो (३) रजस्रं ।

निःश्वासमालागणनाक्रमेण (४)

स्मरे न्मनुं भाविनिशावसान (५) ॥ ५० ॥

षट्शतोत्तरसहस्रसंयुतं योऽजपाकृतिजपोऽयुतद्वयं ।

चक्रषट्कगतदेवताः क्रमा त्तं विभज्य विधिव त्समर्पयेत ॥ ५१ ॥

प्रत्येकपत्रगतदैवतभाग (६) माहु

र्द्वात्रिंशदुत्तरचतुःशतसंख्य (७) मेतं ।

वेदर्त्तुदिग्रविकलानयने (८) निहत्य

षट्चक्रदैवतगणाय समर्पयेच्च ॥ ५२ ॥

---

(१) तथापि पूर्व्वदले पुण्यमतिमित्यादिश्रुतेः ।

(२) द्वासुपर्णा इत्यादिना इत्यर्थः । (३) तस्यजीवमन्त्रस्य ।

(४) निःश्वासपंक्तिरेव माला तया या गणना तत्क्रमे णेत्यर्थः ।

(५) भविष्यद्रात्र्यन्त पर्य्यन्तं ।

(६) पञ्चाशत् पत्रगत देवतानां मध्ये एकैकस्य भागं ।

(७) ४३२ परिमितं ।

(८) मूलाधारपद्मादारभ्य ४. ६. १०. १२. १६ २ ललाट पर्य्यन्तं ।

आरभेऽत्यं व्यापृतश्चेत् क्रियासु
नास्य क्वापि व्याहत स्तज्जपः स्यात् ।
क्षिप्तो बाणो वेगसंस्कारयुक्तो
लक्ष्ये (१) वासौ याति शान्तिं निशान्ते ॥ ५३ ॥

एवं जीवोऽनुलव मजपां निर्गतान्तःप्रविष्टैः (२)
श्वासै र्नित्यं (३) जपति स यदि स्वं विजानाति भाग्यात् ।
ऐशं मन्त्रं स्मरति सततं सन् परात्मस्वरूपो
हम्सौ हित्वा तत् स्वरयुग मथोच्चारयेद् ब्रह्मतारं (४) ॥ ५४ ॥

ह्रस्वं त मुच्चार्य्य दहत्यऽघौघं (५)
दीर्घं (६) समुच्चार्य्य निहन्ति रोगान् ।
प्लुतं (७) क्रमा द्वादशमात्र मेतं
समभ्यसन् पश्यति चक्षुषाऽद्धा (८) ॥ ५५ ॥

एतज्जापी नैव पापी क्वचित्स्यात्
नैवोत्तापी क्वापि नाप्नोति खेदं ।
तस्मादेष श्वाससंख्यैकमाध्य
स्तस्मा द्दक्ष्ये श्वासमानं क्रमेण ॥ ५६ ॥

(१) क्षिप्तः शरः वेगाख्यसंस्कारवशाल्लक्ष्ये यथा शाम्यति तथाऽसौजापः प्राप्तनिशावशानः शाम्यतीत्यर्थः। वाकारइवार्थः इववद्वायथाशब्दादित्याद्यनु शासनात् ।

(२) वहिर्गतैरन्तः प्रविष्टैश्च । (३) प्रतिक्षणं ।

(४) सोऽहं इत्यत्र सकारहकारौत्यक्त्वा तयोः स्वरयुगं ओकारानुस्वारौ-एकीकृत्य ओं इति समुच्चारयेदित्यर्थः। (५) ह्रस्वोदहति पापानित्युक्तेः ।

(६) द्विमात्रं । (७) त्रिमात्रादिद्वादशमात्रापर्य्यन्तं ।

(८) साक्षात् प्रणवं पश्यति ।

सुतीक्ष्णसूच्यग्रविभेदकाल (१)
स्त्रुटि र्मता तत्‌शतकं लव: स्यात् ।
तत्त्रिंशता त्रुटिगतो (२) निमेष:
सूक्ष्म: स काल: खलु पक्ष्मलक्ष्य: (३) ॥ ५७ ॥
तत्सप्तविंशत्युपचीयमाना
काष्ठा स गुर्वक्षरयोग्यकाल: ।
गुर्व्वक्षरै: स्याद्दशभि: समुक्तै:
प्राण:, स नि:श्वासमितो (४) नराणां ॥ ५८ ॥
स वहति वहिरेषां नासिकावामदक्षा-
वटपटगतनाड़ीमार्गतोऽर्काङ्गुलान्तं (५) ।
पुनरय मतिखेदै: क्षोभितैरस्मिन् शरीरे
असममुचितवेगा-दाति चेकैकरुद्धरा ॥ ५९ ॥
गतौ च क्षुत्कारे निविड़शयने शुग्भयमनो-
विषादे संरोधे सरभसपदोत्क्षेपणगतौ ।
व्यवाये व्यायामे मरणसमये श्वासपवन:
क्रमाद्वृद्धिं (६) गच्छे त्त्वरमगमनात् शाम्यति परं ॥ ६० ॥

---

(१) पक्ष्मादिच्छित्यादि: ।
(२) त्रिंशत्त्रुटिभिर्मनुष्याच्चिगतो निमेष स्यात् ।
(३) पक्ष्मपातेन लक्षणीय: ।
(४) सप्तविंशति-निमेष-परिमितकाष्ठादशकै: प्राणाख्य एकश्वास: ।
(५) प्रादेशमात्रं ।
(६) इत्यादिषु नवसु व्यापारेषु त्वरादिदक्षया वातीत्यर्थ: ।

ह्रासं वृद्धिं वा गते श्वासवायौ
काल स्तावा-न्नास्य हानि र्न वृद्धिः ।
तं श्वासाख्यं मूर्त्तिमन्तव्यकालं
विद्यादायुः स्यान्मनुष्यादिरञ्चेः (१) ॥ ६१ ॥
यावान् क्रमात् प्राणबलोऽधिकः स्या-
त्तावद्विलम्बं वहते स वायुः ।
नृतोऽधिकः प्राणबलः पितॄणां
त्रिंशद्गुण स्ते हि तथा श्वसन्ति ॥ ६२ ॥
पितृभ्योऽधिकः प्राणसारः सुराणां
द्विषड्गुणै रेव मूर्द्धोर्द्ध्वलोके ।
क्रमात् प्राणसारोऽधिको देहभाजां
समस्ताधिको ब्रह्मणः प्राणसारः ॥ ६३ ॥
तस्माद् यस्तु ब्रह्मणः श्वासकालः सोऽस्मत्श्वासैः स्यात्परार्द्धद्वयात्मा ।
प्राणाधिक्य लोकभेदेन सर्वे स्वे स्वे लोके तेन तुल्यायुष स्ते ॥ ६४ ॥
षभिःश्वासै र्लिप्तिका सा विनाड़ी
तासां षष्ट्या नाड़िका सैव दण्डः ।
दण्डैः षष्ट्या स्यादहोरात्र मेतत्
शून्यद्वन्द्वर्त्वेकहस्तश्वाससंख्या (२) ॥ ६५ ॥

---

(१) स्यात्मनुष्यादिरञ्चे रितिपाठः (घ) पुस्तके । सच समीचीन इव प्रतिभाति ।

(२) प्रत्यहमहोरात्रिभ्यां २१६०० परिमिता औत्सर्गिकाः श्वासा वहन्तीति समस्यं ।

अहोरात्रकं त्रिंशता मास माहु र्द्विषड्भिश्च ते वर्ष मेषां शतेन।
भवे त्पूरुषस्याऽऽयु रेवं विरञ्चेः सुराणां पितॄणां नराणां क्रमेण ॥६६॥

नराणां पुन र्यादृशः प्राणसारः
कृते स्या त्ततोऽन्येषु हीनो युगेषु।
क्रमात् पादमात्रेण स स्या त्ततोऽस्मिन् (१)
युगे, सत्त्वहीना नरोऽल्पायुषः स्युः ॥ ६७ ॥

अयं कर्म्मभूमि र्मतो मर्त्त्यलोक
स्ततोऽन्ये पुन र्भोगभूम्योऽभवन्ति।
अतः पुण्यतः पापतो वृद्धिहानी
इह स्तो नृणां देहसत्त्वायुषां हि ॥ ६८ ॥

परमायुःशतवर्षमध्यतोऽस्मिन् यदि कश्चि न्म्रियते कियद्भि रब्दैः।
स नियत्यनुरूपलब्धलोके स तदाकारधरो (२) भुनक्ति शेषं ॥ ६९ ॥

संपूर्णे शतवर्षेऽसौ पुन रन्यां तनुं श्रितः।
जायमानः शतं भुंक्ते वर्षाणीह परत्र च ॥ ७० ॥

अयं प्रपञ्चः कथितः प्रसङ्गा
दथ क्रमात् प्रस्तुत मीरयामि।
न हि प्रसङ्गे पतिते कुतश्चिज्
ज्ञातार्थतत्त्वा द्विरमन्ति सन्तः (३) ॥ ७१ ॥

---

(१) कलियुगे। (२) यत्शरीरेणाल्पायुर्भुक्तं स्तन स्वज्जातीयशरीरे दधदवशिष्टं स्वक मायु र्भुंक्ते इत्याशयः।

(३) प्रसङ्गागतविषयमवगतवन्तः साधवः प्रसङ्गे सति तद्विषमग्युत्पादनेनो स्कण्ठा मात्मनोऽपनुदन्तीति स्वरसस्त्विद्धमेतत्।

तती विश्वगो विष्णु रन्यो न मत्त
स्ततो नाहं मन्य: स एवाह मस्मि ।
इति प्रेक्षयाऽद्वैत मालच्य साक्षा-
दुदासीनतां कर्म्मणो निश्चिनोतु ॥ ७२ ॥

न करोमि न कारयामि किं चि-
न्न च कृत्यं करणं न मेऽस्ति किं चित् ।
अपि वास्तवतोऽहं मक्रियोऽस्मि
कृति-रेषा ह्यहमात्मनेन्द्रियाणां (१) ॥ ७३ ॥

जानामि धर्मं न च मे प्रवृत्ति
र्जानाम्यऽधर्मं न च मे निवृत्तिः ।
केनापि देवेन हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करिष्ये ॥ ७४ ॥

इयं शरीरेन्द्रियचित्तवृत्तिः
कृता क्रिया ह्यस्तु तवापचित्यै ।
यतो न मे नाथ निवन्धनं स्या
दुतप्रयास्ये प्रपदान्तिकं ते (२) ॥ ७५ ॥

(१) अहमित्याकारेणानुसन्धीयमानानामिन्द्रियाणा मन्तःकरणसहितानामेवेयं कृतिः शोकदुःखादिनिखिलविकारकर्त्तृता, नतु कूटस्थस्वभावस्य ममेत्याशयः ।

(२) यद्यपि वस्तुनोऽन्तःकरणस्यसेन्द्रियस्यैवेयं क्रिया नतु मम, तथापि अभिमानान्ममेव प्रतिभासमाना सेयमखिलाऽपि हे नाथ, तव पूजायै भवतु इति त्वत्पादयोरेव तत् सर्व्वं समर्पयामि, येन कर्म्मसंङ्गवशेन मे वन्धनं माभूत् इति सह कर्म्मभिस्त्वत्पादाग्रे आत्मानमपि समर्पयामीति भावः ।

देव मेव मनुज्ञाप्य बहुनाड़ोपदं पुर: ।
भूमौ निधाय शिरसा नत्वा पृथ्वीं पठेदिदं ॥ ७६ ॥
वसुधे वसुधाधरस्तने सरिदङ्गावृतिसिन्धुमेखले ।
हरिसुन्दरि ते नमो नम: पदपाताभिभवं सहस्व मे ॥ ७७ ॥
इत्थं संप्रार्थ्य देवीं बहि रथ निलया दाशु निर्गत्य खातात्
शस्त्रणास्त्रेण मृत्सां तुषभमितशिलाशर्कराङ्गारशून्यां ।
गृह्णीयान्माज्र्जनायोदकमयमृदलां पक्वतालैकमात्रां
वल्मीकान्तर्जलस्थन्दनमहिषशिवालाङ्गलोत्खातवर्ज्जं ॥ ७८ ॥
तां वेता प्रविभज्य तत्र विधिवद्भागैक मादायत
ग्रामा नैर्ऋत दिग्गते गतभये देशे समे निर्म्मले ।
उद्यानव्रजवह्निदग्धमकुशक्रीड़ास्थलान्तर्जल-
प्रासादान्तिकशाद्वलालयनदीतीरेतरस्मिन् नर: ॥ ७९ ॥
वस्त्रप्रावृतमस्तक: श्रुतिशिखान्यस्तोपवीत स्तथा
किं चिद्दूरगतोदपूर्णकलशो निष्ठीवनो वाग्यत: ।
याम्यास्ये निशि चे द्दिवोत्तरमुखो भूत्वा तथा सन्ध्ययो:
पत्रैधस्तृणकै रयज्ञतरुजै राच्छन्नभूमीतल: ॥ ८० ॥
भूतानि यान्यत्र वसन्ति भूमौ वृक्षेषु वा वारिषु वाऽन्तरीक्षे ।
सत्तालनादा-दपयान्तु तानि यावत् शकृन्मूत्र मिहोत्जेयं ॥ ८१ ॥
इति तान्यपसार्य धैर्य्यवान् निजजानुद्वयमध्यदोर्युग: ।
अचिरा-न्मलमूत्र मुत्सृजे-दनुवर्णा-न्न जप-न्नवोत्श्वसन् ॥ ८२ ॥
अपान मामृज्य तृणै रयाज्ञिकै स्तत: समुत्थाय धृतालमेहन: ।
पुर:समानीतमृदा विशोधयेत् स पञ्चशो गुह्य मथैकशो ध्वजं ॥ ८३ ॥

निःक्षिप्य भूमा ववशिष्टनीरं तीरं समागत्य जलाशयस्य।
शौचं चरेन्मृत्तिकया तथैव दिक्संख्यशो वामकरस्य वाभिः॥ ८४॥
पाण्यो र्द्वयोारप्यथःसप्तकृत्व स्त्रिश स्त्रिशः पादयुगस्य भूयः।
मूत्रस्य शौचेऽपि शिवे तथैकं त्रिशः पदो र्वामकरे च पञ्च॥ ८५॥
एतद्विविचतुर्गुणं परिमितं शौचं क्रमाद्वर्णिनो
वानप्रस्थजनस्य भिक्षुकयतेः स्वस्थस्य कार्य्यं पुनः।
तत्र स्वाश्रमसंस्थितेन सकलं कर्त्तव्य मन्याश्रम-
स्थेनार्द्धं नगरस्थितेन च पुन स्तस्यार्द्ध मप्यध्वगैः॥ ८६॥
निबद्धनीवीचिकुरः करौ च श्रवोऽन्तनासं परिमृज्य मृज्जलैः।
विधाय गण्डूष मफेनपाथसा स्पृशेदथाङ्गानि तथोत्तराननः॥ ८७॥
मुखं स्पृशे मध्यगताङ्गुलित्रिभिः स्मरन् हुताशं तदधीशदैवतं।
अङ्गुष्ठतर्ज्जन्युभयेन नासिकापुटद्वयं स्वभिषजौ स्मरन् सुधीः॥ ८८॥
अनामिकाङ्गुष्ठपुटेन चक्षुषी
उपस्पृशेत् पूषण मन्तराद्दधत्।
ताभ्यां श्रुतिद्वन्द्व मनिन्दिताशयः
स्पृशेद्यथावच्च दिशोऽनुसंस्मरन्॥ ८९॥
नाभिं तथाङ्गुष्ठयुजा कनिष्ठया व्योमस्वरूपं हृदि चिन्तयन् स्पृशेत्।
तलेन पाणे र्हृदयं स्पृशेत् पुन र्देवं तथा चन्द्रमसं हृदा दधत्॥ ९०॥
शिरस्तु सर्व्वाङ्गुलिभिः स्पृशे त्परंब्रह्मस्वरूपं मनसा निरूपयन्।
स्पृशे त्कराग्रेण भुजद्वयं ततः स्मरन्नधीशं श्रुतिवि त्सुपर्व्वणां॥ ९१॥
संस्पृश्येत्थं द्वादशाङ्गानि विद्वा न्नित्ये कर्म्मण्यत्र नैमित्तिके वा।
स्यात्संशुद्ध स्नातव त्सर्व्वकृत्ये नो संदेहो याज्ञवल्क्योक्ति रेषा॥ ९२॥

नक्तं सुप्तस्य मर्त्त्यस्य मृतप्रायस्य नित्यश: ।
लालामिश्रमुखं प्रात: शोधनीयं हि तद्यथा ॥ ८३ ॥

करञ्जखरमञ्जरीवटकदम्बनिम्बाम्लिका
मखाङ्गरविकिंशुकैकतमदारुणा चारुणा ।
कषायकटुकण्टकान्वितमदुग्धतिक्तद्रुमो-
द्भवेन मृदुलार्ज्जुना सुरभिणा प्रशस्तेन च ॥ ८४ ॥

कनिष्ठाङ्गुल्यग्रप्रमितपृथुना पर्व्वयिजुजा-
गृहीतेनोमायुर्व्बलमिति (१) वितस्त्यायतिमता ।
अनाद्याये त्युक्ता मनु मश्र शनै र्दन्तनिकरं
यथा रक्तस्रावो (२) न भवति तथा शोधयतु स: ॥ ८५ ॥

नहि प्रतिपदष्टमीनवमवासरैकादशी-
गिरीशतिथिपूर्णिमाग्रहणदर्शषष्ठीषु च ।
स्वजन्मतिथिसंक्रमव्रतविवाहपित्राद्धिको-
पवासमुखदूषिते दशन (३)-मिधमा शोधयेत् ॥ ८६ ॥

अतो निषिद्धेषु दिनेषु निर्म्मलै:
समुद्धते र्व्वारिभि रफेनकर्द्दमै: ।
विधाय गण्डूष मथार्कसंख्यया (४)
विशोधये द्वा मुख मास्त्रपल्लवै: ॥ ८७ ॥

(१) ओं आपुर्व्वलमितिमन्त्रेण ।

(२) रक्तस्रावे तद्दिनमशौचमापतेदिति दैवपित्र्यकर्म्मानधिकारप्रसङ्ग: स्यादित्याशय: ।

(३) काष्ठेन ।

(४) तेषु द्वादशगण्डूषैर्मुखशुद्धिर्विधीयतेइति वचनात् द्वादश संख्यया द्वार्ब्व:)

यथैतदेवानुदिनं विधेयं
तथा रसनाऽपि विशोधनीया।
नैतद्विना शुद्धिमुपैति मर्त्त्यः
स्नातोऽपि सर्व्वैरिह तीर्थतोयैः॥ ९८॥

निर्गुण्डीरण्डकार्पासतृणतरुजवायन्नदुर्गन्धकाष्ठै
र्नो दन्ताः शोधनीयाः क्वचिदपि रसना (१) प्यत्र मौनं विधेयं (२)।
स्थातव्यं प्रागुदीचीदिगभिमुखतया प्रत्यवायोऽन्यथास्या-
त्तच्छेषः शौचशेषस्तदवनितलतो दूरतः क्षेपणीयः॥ ९९॥

विण्मूत्रशुक्ररुधिराणि वसा च मज्जा
स्वात्ममलानि षडिमानि समृत्पयोभिः।
शोध्यानि कर्णनखनेत्रमलानि लाला
स्वेदश्च सिङ्घिनिजलं च बहिर्मलानि॥ १००॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्व्वस्वे निशान्तकृत्यं नाम षोडशसंग्रहः॥ ०॥

---

(१) रसनाऽपि इत्यत्र वचनविपरिणामेन "न शोधनीया" इत्यनुषङ्गः।

(२) दन्तरसनाशोधनकर्म्मणि मौनभङ्गतया विहितं तच्च जिह्वाकर्म्मत्वात्-दिना रक्तस्रावसम्भवात् लालाद्यमेध्यस्य शोषणादिना गलाधःकरणसम्भवात् च [illegible] द्वारैव तदङ्गं इत्यवधेयं।

## अथ सप्तदशः संग्रहः ।

इति सकलमलानि शोधयित्वा निशिनिशि पर्य्युषितात्मदेहशुद्धेः ।
यदधिकृतवताऽथ यो विधेयः स्नपनविधिं तमहं विविच्य वच्मे ॥ १ ॥

स्नानद्वैधं चान्तरं बाह्य मित्थं
ज्ञेयं ध्येयं चैत्य माद्यं द्विधाऽऽहुः ।
मान्त्रं भौमं दिव्य माग्नेय मन्त्य
द्वायव्यं तद्वारुणं चेति षोढा (१) ॥ २ ॥

प्रत्येक मेषां सफलं स्वरूपं
निरूपयाम्यष्टविधोदितानां ।
विमृश्य यत्कृत्यविदोऽपशङ्कं
प्रचारयिष्यंति चरिष्यमाणान् (२) ॥ ३ ॥

उद्यद्भास्वद्भास्वरं वासुदेवं देवेन्द्राश्मप्रख्य (३) मच्छोभमूर्त्तिं ।
नानाभूषाभूषितं सस्मितास्यं हस्तान्तास्त्रं भूरमालीढ़पार्श्वं (४) ॥ ४ ॥

(१) आन्तरं बाह्य मित्थं प्रकारभेदेन स्नानद्वैधं आहुरित्यपेक्षान्वयः। पण्डिता इति शेषः। तत्राद्यमान्तरं स्नानं ज्ञेयं ध्येयमिति द्विधाऽप्याहुः। अन्त्य-द्वाह्यं स्नानं मान्त्रादिभेदैः षोढा आहुरिति सर्वत्रानुषङ्गः।

(२) एषां पूर्व्वोक्तानामष्टभेदभिन्नानां प्रयोजनेन सह स्वरूपं प्रतिस्वं निरू-पयामि। यत् आचारवेत्तारः स्वात्मना विचार्य्य विगतशंक माचारमनुतिष्ठन्तः पुरुषान् प्रचारयिष्यंति इति योजना।

(३) इन्द्रनीलमणिश्यामलं।

(४) श्रीधराश्रय पार्श्वमिति ध्यानादित्यागमः।

ध्यत्वा तत्पादाम्बुजद्वन्द्वमध्या-

न्निःस्यन्दन्तीं शुद्धपीयूषधारां ।

स्नायात् कायान्तर्बहिः संनिपात्य

ध्येयं (१) स्नानं चैतदुक्तं शिवेन ॥ ५ ॥

इदं स्नानं ब्राह्मतीर्थसहस्रादधिकं स्मृतं ।

योगीनां स्नान मेतद्धि कथितं परमद्भुतं ॥ ६ ॥

इड़ां वामतो जह्नुकन्यां विभाव्य

सितां, पिङ्गलां दक्षिणे भानुकन्यां ।

तयो रन्तरस्था सुषुम्णा सरस्व-

त्यभिख्येति सूक्ष्माऽतिविख्यातकीर्त्तिः ॥ ७ ॥

मन्दं मन्दं मारुतं नासिकाभ्यां पीत्वा जीवं मूल मानीय तासां ।

शुद्धोऽस्मीतिज्ञानमात्रेण शुद्धो भूयादेतज् ज्ञेय मुक्तं मुनीन्द्रैः ॥ ८ ॥

इदं स्नानं स्थिरो भूत्वा यः करोति सकृ न्नरः ।

आजन्ममरणं स्नानं कृतं तेन न संशयः ॥ ९ ॥

आपोहिष्ठाद्याभिरृग्भि श्चतुर्भिः सद्य स्तोयं मन्त्रवि न्मन्त्रयित्वा ।

अङ्गोपाङ्गं सप्तशः पञ्चशो वा सिञ्चेत् पाथः प्राहु रेतद्धि मान्त्रं ॥१०॥

इत्थं ब्रह्ममयै स्तोयैः स्नाति यः पुरुषोऽसकृत् ।

स हत्वापि महत् पापं क्षणमात्रा-द्विशुध्यति ॥ ११ ॥

पुण्यक्षेत्रानीतमृत्स्नां पयोभिः पाणिभ्यां संमर्द्दयन् भूरसीति ।

नाभे रूर्द्ध्वं लेपयित्वाप्यधस्ता-द्गाढं मृज्या-द्भौम मेतत् मसुक्तं ॥ १२ ॥

(१) ज्ञानापेक्षया ध्यानस्य सुसम्पादत्वात् सत्त्वशुद्ध्यर्थं ध्यानस्यावश्यकत्वा
च्छौचे यागानकर्मं परित्यज्यैव ध्येय स्नानं निरूपितमिति तत्त्वबोध्यं ।

सर्व्वमलाश्रया भूमि स्तया मृष्टकलेवरः।
सर्व्वसत्त्वविमृष्टोऽसौ किं तस्य जलमज्जनैः ॥ १३ ॥
अह्नि व्यक्तं भास्वति द्योतमाने वारंवारं मानिले रम्बुवर्षैः।
स्नाया दादित्याभिवक्तं प्रतिष्ठ न्तेतद्दिव्यं स्नान मुक्तं तु भव्यैः ॥ १४ ॥
तपत्यर्के (१) जले वृष्टे यः स्नाति दिविजे नरः।
मुच्यते सर्व्वदोषेभ्यो दाहान्ते कनकं यथा ॥ १५ ॥
होमं भस्म संहृयन् दर्भवाभि र्गोमय्यं वा कस्य पश्येति मन्त्रैः (२)।
आशीर्षा दापाद मालेपयेत् स्वे देहे दोर्भ्यां मेत दाग्नेय मुक्तं ॥ १६ ॥
सर्व्वयज्ञेषु यत् पुण्यं सर्व्वतीर्थेषु यत् फलं।
तत् फलं लभते शैवो भस्मस्नाना न्न संशयः ॥ १७ ॥
गच्छन् गच्छद्गोसमूहस्य (३) मध्यं
यच्छन् वातं तत्खुरोत्थै रजोभिः।
स्थित्वा वायोः सम्मुखं प्लावयेत् स्वं
देहं प्राज्ञै रत्र वायव्य मुक्तं ॥ १८ ॥
सर्व्वतीर्थपदा गाव स्तत्खुरोत्थितधूलिभिः।
मृष्टाङ्गो धूतपाप्माऽसौ स्वर्गलोके महीयते ॥ १८ ॥

(१) दिव्यस्नानस्य फलमाह, अर्कतपतिसति वृष्टे र्दिविजे जलैर्यो नरः स्नाति यथा दाहान्ते कनकं तथा स सर्वदोषेभ्यो मुच्यते इति योजना।

(२) कश्यपस्य त्र्यायुषं यमदग्ने स्त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषं इतिमन्त्रैः।

(३) चलतो गोयूथस्य।

आवाह्याऽऽदौ तैर्थं मुष्णांशुविम्बा-दम्भस्तोयं मोत्तरीयं वपुः स्वं ।
शाखोक्तेन चालये-दब्ध न तत् प्राहुः स्नानं वारुणं चारुशीलैः ॥ २० ॥

आपो नारायणः साक्षाद् यतो नरसमुद्भवाः ।
ताभि राप्लावितो योऽसौ दिव्यदेहधरो मतः ॥ २१ ॥

एषा मेकतमेन केन-चिदपि स्नातोऽर्चनादिक्रियां
कर्त्तुं नार्हति नेति, किन्तु मलदिग्धस्यात्मनः शुद्धये ।
शस्तं वारुणमेव, तत्र गृहिणां शुद्धि विशेषात् क्वचि-
न्नास्त्येतद्व्यतिरेकतोऽनुदिवसं मृद्भस्मलेपादिभिः (१) ॥ २२ ॥

मृत्स्नानान्ते वारुणं वैष्णवानां वेश्मस्थानां वर्णिनां चापि कार्य्यं ।
आग्नेयान्तेऽरण्यभाजां यतीनां शैवादीनां चेति केचिद्वदन्ति ॥ २३ ॥

नित्यं स्नायाद्वैष्णवो विष्णुतीर्थे
शैवः स्नायात् शैवगङ्गाजलेषु ।
अन्ये स्नायु र्यत्र कुत्रापि तोये
स्वैः स्वै मन्त्रैः केवलं मन्त्रयित्वा ॥ २४ ॥

यत्रासते द्विजवरा सुरवैरिभक्ता
वेश्मानि विष्णुवपुरायुधभांजि तानि ।
एणाश्च वोधितुलसीसहकारधात्री
स्तत्रत्यतोय मुदितं खलु विष्णुतीर्थं ॥ २५ ॥

---

(१) एषां पूर्वोक्ताष्टविधस्नानाना मेकतमेन केनचित् स्नातोऽर्चनादि क्रियां-कर्त्तुं नार्हतीतिन, अपितु अर्हत्येव किंतु-परंतु, मललिप्तवपुषः शुद्धये वारुणमेव प्रशस्तं ।

तत्राश्रमिषु मध्ये ( विशेषतो ) गृहिणां वारुणव्यतिरेकेण क्वचित् मृद्भस्मलेपादिभिः शुद्धिर्नास्ति , अतोऽनुदिनं वारुणमेव कार्य्यं मित्यध्याहारेणान्वयः ।

यत्रासन्नचलच्छदस्य च शिवप्रासादमूलस्य च
भ्राजन्ते प्रतिबिम्बिता न्यनुदिनं तत् शैवगङ्गाजलं।
कासारेषु विशेष एष कथितो यच्चान्य-दाशयं जलं
स्यादा-स्यात मकृत्रिमच्चितिगतं साधारणं त नृणां॥ २६॥
अथागमानां मतिदुर्गमानां मतं विनिश्चित्य तथा स्मृतीनां।
प्रसंगतः प्रागनुसूचितो य स्तं वारुणं स्नानविधिं वदामि॥ २७॥
निजमनुं मनुवि-न्मनसा स्मर-न्नथ कृताचमनः सलिलान्तरे।
स्वतनु मस्त्रसमाहृतमृत्मया प्रथम मूर्द्ध मधः परिमार्ज्जयेत्॥ २८॥
अश्वक्रान्तइतिब्रुवन् (१) मनु मुरोदोः कण्ठभाले मृदा
कुर्य्या-च्चित्रकपञ्चकं पुन रनूच्चार्य्योद्धृतासीति च (२)।
आमूर्द्धप्रपदान्त मम्बुबहुला मालेप्य मृत्स्नां ततः
स्नाया-दञ्जलिनाऽथ पर्णपुटकैः कुम्भेन वैकादश॥ २९॥
ततः स्थित्वा नाभिद्वयसि पयसि स्वस्य पुरतो
लिखेत् पद्मं चाष्टच्छद मुपकनिष्ठाङ्गुलिकया।
स्वमन्त्रेणामन्त्र्य ज्वलनहिमरुग्वासरकृतां
कलाभिर्बिम्बानि स्मरतु दशदन्तार्कविभिः (३)॥ ३०॥

(१) अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे मृत्तिके हर मे पापं यन्मया-दुष्कृतं कृतं। इति।

(२) उद्धृतासि वराहेण कृष्णेन शतबाहुना आरुह्य मम गात्राणि सर्व्वं पापं प्रमोचय।

(३) अं अर्कमण्डलाय द्वादशकलात्मने नमः, रं वह्निमण्डलाय दशकलात्मने नमः, उं सोममण्डलाय षोडशकलात्मने नम इत्याद्यावाह्याद्यर्घ्यः।

एहि जह्नुतनये सरस्वति ब्राह्मि वैतरणि सिन्धु गोमति।
कृष्णवेणि यमुने पुनःपुने गौतमीन्दुतनये कवेरजे (१) ॥ ३१ ॥
इत्युदीर्य्य दिवि सूर्यमण्डला-
त्तीर्थवृन्द मभिवाह्य मन्त्रवित्।
रक्षितं तदरिमुद्रया (२) ततः
संस्करोत्वथ स वीक्षणादिना ॥ ३२ ॥
वीक्षणं भवति मूलमन्त्रतोऽ-
ङ्गुष्ठनामरहितास्यगा दृशा (३)।
प्रोक्षणं सकुसुमास्त्रवारिभि
स्ताडनं द्विविध मस्त्रमन्त्रतः ॥ ३३ ॥
ऊर्द्ध्वमूर्द्ध्वगततालिकात्रिभिः स्यादिह प्रथमतोऽवताड़नं।
दक्षमुष्टिगततर्ज्जनीशिरोऽङ्गुष्ठयो रुपरि शब्दतोऽपरं ॥ ३४ ॥
तर्ज्जनीभ्रमणतोऽवगुण्ठनं वर्म्मणाऽथ सुधयाऽमृतीकृतिः।
स्यादधोवदनधेनुमुद्रया मूलतः प्रणवतोऽथ चाऽऽस्ततः ॥ ३५ ॥
तद्वदेव परमीकृति र्महामुद्रया ऽथ मनुनाऽष्टधा जपः।
एष संस्कृतिविधि र्विधानतो द्रव्यसंस्कृतिविधौ विधीयते ॥ ३६ ॥
इत्थं संशोध्य तीर्थं सजलकुशकरो देशकालादिवाक्यैः
संकल्प्य स्नातु मादौ तदनु मनुमुनिच्छन्दसो देवतां च।
न्यस्त्वा निःश्वासरोधं पयसि पुन रसौ संनिमज्ज्य त्रिकृत्वः
कृत्वाऽङ्गन्यासशेषे त्रि-रनिलयमनं संस्मरे-दिष्टदेवं ॥ ३७ ॥

(१) कावेरि। (२) चक्रमुद्रया।
(३) अङ्गुष्ठानामिकायुक्तनयनेन

ततः कलशमुद्रया मिथ उपोढ़दोर्गर्भया
स्वदक्षिणकनीयसीनिहित-सव्य-हस्ताग्रया ।
असव्यकरमूर्द्धभि ग्रथितसव्यदोर्ज्येष्ठया
नभः कलितमध्ययाऽभिमुखवक्रसंबद्धया ॥ ३८ ॥
समाहृते मन्त्रपुमन्विते जलैः स मूर्द्धि सिञ्चे-द्दशशोऽथ सप्तशः ।
द्विशःसमाचम्य समागत स्तटं विनम्रमूर्द्धा प्रणमेत् प्रचेतसम् ॥ ३९॥
एष आगमनिरूपितो विधिः स्नानकर्म्मणि ततोऽन्यथा पुनः । (१)
वैदिकः स खलु कथ्यते क्रमाद् वारुणेन मनुनाऽघमर्षणैः ॥ ४० ॥
संस्कृत्य तोयं त्वघमर्षणीभि ऋंग्भि स्ततो वारुणसूक्तषट्कं ।
स्मृत्वा स मुन्यादिक मेककेन स्नानं षड़ङ्गं मनुना विदध्यात् ॥ ४१ ॥
इमं मन्त्रेणादौ वरुण मभिवाह्या ऽन्यमनुना
समाचम्यान्येन प्लुत मुदक मापीय च सकृत् ।
चतुर्थांशं तोये सपदि विनिमज्जेऽतर-ऋचा
त्रिशः स्नात्वाऽऽचम्य प्रणमतु ततोऽन्येन वरुणं ॥ ४२ ॥
अयं विधिः प्रागरुणोदयात्-स्या-
दर्शनान्नानुमत स्तदानीं ।
नावाहयेत् केवल मर्कतीर्था- (२)
न्येतानि यस्मात् सलिले वसन्ति ॥ ४३ ॥

---

(१) स्नानकर्म्मण इतोऽन्यथा पुनः इति (ख) पुस्तके पाठः ।

(२) सूर्य्यमण्डलात्तीर्थानि नावाह्नयेत् यतस्तानि प्रात. सलिलेवसन्ती-त्याशयः ।

गृहस्थितानां मरुमाश्रितानां देवा-त्तथा ग्रामजलाशयानां ।
स्नानं समुक्तं विधिनाऽमुनैव कुम्भोद्धृताम्भोभि रिति प्रसिद्धं ॥ ४४ ॥

प्रभातमध्यंदिनसाय मित्थं
स्नाया-त्त्रिकालो यदि क्षत्यशक्तः ।
ततोऽन्यथा द्विः सकृदत्यशक्तो,
ऽस्नातस्य सर्व्वं विफलं हि कर्म्म ॥ ४५ ॥

मध्यंदिनादौ यदि ये त्वशक्ताः स्नातुं मनुस्नान मिमे विदध्युः ।
ये रोगिणः क्षत्यपरा भवेयु, स्ते कापिलं स्नान मथाचरेयुः ॥ ४६ ॥

नाभे रधस्तात् सलिलं प्रविश्य सम्यग्जले राकटि मार्ज्जयित्वा ।
आर्द्रांशुकेनाऽऽशिरसः प्रतीकान् संप्रोञ्छयेत् कापिल मेतदुक्तं ॥ ४७ ॥

गृहीयु रङ्गे यदि ये तु तैलं
स्नात्वा ततोऽभ्यज्य पुन र्जलेन ।
स्नायु श्च नो पर्व्वसु नापि षष्ठ्यां (१)
तत्रापि नो दूष्यति पक्वतैलं ॥ ४८ ॥

कूपे वाप्यां देवखाते नदादौ
तीर्थे गङ्गासङ्गमे सागरस्य ।
स्नात्वा पुण्यान्येति चाष्टोत्तराणि
नोष्णे नीरेऽमन्त्रिते चास्ति किञ्चित् ॥ ४९ ॥

कृत्रिमेषु सलिलाशयेषु च प्राग्ददां सजलपिण्डपञ्चकं ।
पाणिना स्वय मुपक्षिपं-स्ततः स्नान माचरतु नात्मकृत्त्रिमे (२) ॥५०॥

(१) तैलग्रहणे पर्व्वषष्ठ्यां निषेधे प्रतिप्रसवमाह ।

(२) निजकृते ह नैत्रभित्यर्थः ।

यस्तं व्रजत्यनुदिनं दिनकृद्दिनान्ते
तेजो निधाय दहनेऽखिलतीर्थभूतं ।
दिक्षु स्तदग्नि रसु सम्भृदयिष्यमाणम्
प्रातः प्रयाति सलिलं सह तीर्थसंघैः ॥ ५१ ॥

तस्मादित्थं स्नाति यः प्रात रप्सु स्नातं सद्यः सर्व्वतीर्थेषु तेन ।
सर्व्वे रोगा वह्निमान्द्यादिकाश्च नश्यन्त्यस्य ब्रह्मतेजः समिन्धे (१) ॥५२॥

एवं स्नात्वा शक्तितोऽशक्तितो वा
यत्र स्नाया स्तत्र संध्यादिकर्म्म ।
सर्व्वं कुर्व्वीत स्थले वा जले वा
यद्यत् कुर्य्यान्निष्फलं व्यत्ययेन (२) ॥ ५३ ॥

उत्तरीयवसनं निपीड्य तद्दत्तपृष्ठभुजयुग्महृत्शिरः ।
प्रोञ्छये दवयवानिति क्रमा-न्नान्यथा, (३) तदनु तेन पद्द्वयं ॥ ५४ ॥

वासः पिधाय सदशं शिति-शोणिताद्र्-
निस्यूतजीर्णपरकीयमलान्विताऽन्यत् (४) ।
स्वच्छं सुसंस्कृत मथाऽच्छमति स्त्रिकच्छं
धृत्वोत्तरीय मपि तादृ (५) गपः स्पृशेच्च ॥ ५५ ॥

(१) समिद्धे इति (क) पुस्तके ।

(२) व्यत्ययेन यद्यत्कुर्य्यात् तत् सर्वं निष्फलं भवेदिति शेषः ।

(३) उत्तरीयवसनं निष्पीड्य तेन सव्यपृष्ठ भुजद्वयोरः स्थलशिरांसि क्रमेण प्रोञ्छयेत् न तु व्यत्ययेन । तदनन्तरं च पादद्वय मित्यर्थः ।

(४) दशायुक्तं न तु खण्डितं, कृष्णरक्ताद्र्वनि स्यूतजीर्णं परकीय मलिनभिन्नं च वासः पिधायेति योजना ।

(५) तादृगुपदर्शितरूपमुत्तरीयं च धृत्वा इत्यन्वयः ।

नैशं वासो वासरे नो पिदध्या
न्नाधो दध्या दुत्तरीयं कदाचित्।
तीर्था त्ताव न्नाहरेत् स्नानवस्त्रं
याव त्तोयै स्तर्पणं स्यात् समाप्तं (१)॥ ५६॥

दृष्ट्वाऽऽदर्शे स्व मथ तिलकान्यर्कसंख्यानि कुर्य्या
दादौ भाले करतलमितं त्र्यङ्गुलं द्व्यङ्गुलं वा।
वक्षस्यब्जाकृति भुजयुगे वेणुपत्राभ मन्य
द्दोपार्श्वेवं त्तदनु विधिना मूर्ध्नियक् पञ्चरस्य॥ ५७॥

भूदेवानां भूरिपाण्डूर्ध्वपुण्ड्रं तिर्य्यक् पुण्ड्रं चारुणं क्षत्रियाणां।
वैश्यानां स्यात् पीत मर्द्धेन्दुतुल्यं वृत्तं नीलं चान्त्यजानां ललाटे॥५८॥

सच्छिद्रपुण्ड्रं खलु वैष्णवानां, न जातु तिर्य्यक् तिलकं प्रशस्तं।
सौरस्य शाक्तस्य च शाङ्करस्य वैनायकस्यापि न कापि निष्ठा॥ ५९॥

गोपीमृत्तुलसी मृदामलयजैः कुर्य्यात् क्रमा द्वैष्णवः
शाक्तः कुङ्कुमरोचनादिभि रथो शैवः सिते र्भस्मभिः।
भिन्ने रोहितचन्दने र्मदयुतैः सौरश्च वैनायक (२)
स्तर्जन्या खलु मध्ययाऽनभिधयाऽङ्गुष्ठेन चैवान्यया (३)॥ ६०॥

---

(१) यावत् तोयैस्तर्पणं समाप्यते, तावत् स्नानवस्त्रं तीर्थादुपरि नाहरेत् तथा निष्पीड़येदित्यर्थः।

(२) रक्तचन्दनैर्दलितैरेव सौरः, तैरेव कस्तूरिकायुतैर्गाणपत्य इत्यर्थः।

(३) तिलकधारणेऽङ्गुलिनियममाह तर्जन्या वैष्णवः मध्यमया शाक्तः, अनामिकया शैवः कनिष्ठया गाणपत्यः अङ्गुष्ठया सौरः।

भवं त्रिलकधारणादशुचि रप्यवश्यं शुचिः
सदोष इव तद्विना शुचिरपि श्मशानोपमः।
अतः सतिलक श्चरेत् सकलकर्म्म नित्यादिकं
कृतं विफल मन्यथा फलति केवलं तत् श्रमं ॥ ६१ ॥

ततः चालितांघ्रिः चिता-वासनस्थः
स्पृशे-द्वादशाङ्गा-न्यमौ पूर्व्वरीत्या।
कृते स्पर्शने तत्र तत्तत् प्रतीका-
धिदेवाः पर तस्य तोषं प्रयान्ति ॥ ६२ ॥

शिखामन्त्रतो दक्षिणावर्त्तरीत्या
शिखाबन्धनं शुद्धपाणि र्विधाय।
कुशान् वा सत स्तर्जनीसंहिताग्रान् (१)
वटुं दक्षिणाऽनामिकायां दधीत ॥ ६३ ॥

अक्लीवदर्भद्वितयेन (२) मूला-त्यक्ताऽङ्गुलिद्वन्द्वमसम्मुखेन (३)।
प्रदक्षिणावृत्तगतेन मध्ये संदृभ्य गाढ़ं वटुकं विदध्यात् ॥ ६४ ॥

तारशक्तिवटवे कवचास्त्रै रस्य मन्त्र उदितो मुनिपूर्व्वं।
न्यास मस्यतु मनो रथ कुर्य्या-द्वाक्षणा वसुविराड्वटुकेशैः ॥ ६५ ॥

स्फुरत् सहस्रार्च्चि रुदग्रवर्च्चसं बालं विशालालक मिन्दुसुन्दरं।
धृतारिशूलं सुरसिद्धसेवितं देवं भजामो वटुकाधिदेवतं ॥ ६६ ॥

---

(१) तर्ज्जनीमूले संसक्तानि अग्राणि येषां तादृशान् दधीत इत्यर्थे णान्वयः।

(२) नपुंसकलक्षणवर्जितदर्भयुग्मेन।

(३) परस्परानभिमुखेन।

इति ध्यात्वा मनुं जप्त्वा दधानो वटुकं मुनिः।
रक्षितो यक्षरक्षोभ्यः साक्षाद्ब्रह्मेव राजते ॥ ६७ ॥
यथा रमेशस्य शये सुदर्शनं शिवस्य शूलं कुलिशं शतक्रतोः।
तथाऽऽयुधं विप्रकरे विराजते स्वमन्त्रपूतं वटुकं भयापहं ॥ ६८ ॥
ततः सवटुपाणिना पुरट-मुद्रिकाशालिना।
स्वधः कृतकनीयसा समसमुज्झितज्यायसा ॥ ६९ ॥
करोदरमितेन वा किमथ माषमग्नेन वा।
समग्र सवटुस्पृशाऽऽचमन माचरेत् पाथसा ॥ ७० ॥
त्रिमात्रिकं व्याहृतय श्चतस्र श्चान्तं सतत्त्वं पुरुष स्तथाहः (१)।
आदित्यशब्दो वरुणः पुनातु स्वाहान्वितोऽयं मनु राचमस्य ॥ ७१ ॥
अस्यर्ष्याद्या श्चिन्तनीया विरञ्चि
र्गायत्र्यापो ऽङ्गानि षड्व्याहृतीभिः।
ध्येयो देवः क्षीरसिन्ध्वन्तरस्थः
क्षीरस्रावी सौध-कुम्भं दधानः ॥ ७२ ॥
एवं ध्यात्वाऽऽचम्यतु द्विः सकृद्वा वाह्व कृत्वा जानुयुग्मान्तरस्थौ।
मौनी भूत्वोदङ्मुखः प्राङ्मुखो वा नीत्वानीत्वा चाम्बु तीर्थद्वयेन ॥ ७३ ॥
तीर्थानि पञ्च निवसन्ति करे द्विजानां
ब्राह्मं च दैव मथ पैतृक मेव सौम्यं।
प्राजापतं श्रवमि दक्षिणतश्च गङ्गा
वामेऽर्कजा नाम तथाऽस्ति सरस्वती च ॥ ७४ ॥

(१) अत्र "शान्तं च सत्यं पुरुष स्तथाहु" इति (ख) पुस्तके एवं "शान्तञ्च तत्वं पुरुष स्तथाहं" इति (ग) पुस्तके पाठः।

ब्राह्मं तीर्थं दक्षिणाङ्गुष्ठमूले दैवं तीर्थं ह्यग्रभागेऽङ्गुलीनां ।
तर्ज्जन्यङ्गुष्ठान्तराले च पित्रं प्राजापत्यं तत्कनीयस्यधस्तात् ॥ ७५ ॥
सौम्यं तीर्थं पाणिमध्ये समन्ता-
त्तेनाऽऽचान्तो मुच्यते पापवृत्तात् ।
अन्येषां स्या-त्तर्पणेषु प्रयोगा
ब्राह्मादीनां कीर्त्तितानां प्रसङ्गात् ॥ ७६ ॥
ब्राह्मेण द्विः सौम्यतीर्थेन चैक माचामि त्वे-दाचमोऽसौ सकृत् स्यात् ।
क्षुज्जृम्भानिष्ठीवनेष्वम्बुपाने नीचालोकेऽसौ विधेयोऽनृते च ॥ ७७ ॥
तोयालाभा-द्देषु संस्पृश्य नासां
दक्षश्रोत्रं संस्पृशे द्दक्षदोषा ।
दुर्व्वाच्योक्तौ दुःश्रवेऽर्थे श्रुते वा
हस्ताग्राभ्यां संस्पृशेत् कर्णयुग्मं ॥ ७८ ॥
स्नाने पाने भोजनेऽध्वाटनेऽन्ते
सन्ध्याद्यर्च्चाहोमजाप्येषु पूर्व्वं ।
आचामेद् द्वि र्वाह्यविट्स्पर्शने ऽसौ
सुप्ते दैवात् स्नानपूर्व्वं चमेद्द्विः ॥ ७९ ॥
इति कृताचमनः समनन्तरं सकलशोधिकया किल सन्ध्यया ।
निगममातर मेष उपासितुं रवि मपि प्रयतेत यतात्मना ॥ ८० ॥
सन्ध्यायन्ते यत्र देवा स्त्रिकालं सन्धीयन्ते यत्र वा सा हि सन्ध्या ।
सैवोपास्या भूसुरक्षत्र-वैश्यै र्ब्राह्मी सन्ध्या कथ्यते तत्र मुख्या ॥ ८१ ॥
सा द्विधा भवति वैदिकी पुन स्तान्त्रिकीति कथिता प्रयोगतः ।
आदिमा त्रिपदया परिष्कृता, त्वामर-त्रिपदया कृता ऽन्तिमा ॥८२॥

प्रभात-मध्यंदिन-साय मित्थं द्विजै रुपास्येत उभे त्रिकालं।
यदर्थ मर्क स्त्रिसृणां पुरीणा मुपर्य्यसौ तिष्ठति वै मुहूर्त्तं ॥ ८३ ॥

भवति तत्र खलूत्तममध्यमाऽ
धमभिदा त्रिविधा समयक्रमात्।
नभसि तारकिते ऽरुणिते, दिवा-
करकरोत्खचिते च तथोषसि ॥ ८४ ॥

मध्याह्निको मध्यगतार्कविम्बा
सायाह्निको चापि भवे-त्त्रिधा सा।
उपास्तसूर्य्याऽस्तमितार्कविम्बा
विभक्ततारेति मतोत्तमाद्यै: ॥ ८५ ॥

सन्ध्याकालं सार्द्धमुहूर्त्तं मनुराह
ज्ञात्वा तस्मिन् संयतचित्तो ह्यनुतिष्ठेत्।
कालेऽतीते सा चरिताऽपि द्विजमुख्यै:
सन्ध्या बन्ध्या स्त्रीव न किंचित् फलदा स्यात् ॥ ८६ ॥

कालातिक्रमणे मनुं च दशधा जप्त्वाऽनुतिष्ठे-त्तथा
शक्तो देव-मनुस्मरं-स्त्रिपवसं विद्यां जपे-न्निश्चल:।
प्राणै: कण्ठगतै रपि प्रतिदिनं नोल्लंघयेत् साधक:
सन्ध्यां वाकृतमुकर्मजाघशमनीं त्रैकालिकीं वैधर्मीं ॥ ८७ ॥

आदौ सन्ध्योपास्यते श्रौतसत्या
पश्चा-त्ताव-त्तन्त्रमार्गेण नित्यं।
द्वे चात्याज्ये सर्व्वदा विप्रवर्य्यै
स्तस्मा दादौ वैदिकी सेवनीया ॥ ८८ ॥

गायत्र्योपनये भवति ब्राह्मणोऽग्निं सुरेशं ब्रह्मात्मजं त्रिष्टुभा
गायत्र्यावहि तावुभौ किं मथवा वैश्यं जगत्या पुनः ।
इत्यादि श्रुतितो यया त्रिपदया संस्कार्य्यते ब्राह्मणः
सापि क्वापि चतुष्पदा प्रभवति प्राय स्तुरीयान्विता ॥ ८९ ॥
परोरजसि सावदोमिति मता तुरीया हि साऽ
ष्टवर्गमयमातृकाप्रभव-कारणाष्टाक्षरा ।
अशेषजगदुद्भव-प्रलयपालनाकारिणी
ततोऽत्र तदुपासना प्रथमतो विधेया द्विजैः ॥ ९० ॥
ध्यात्वा विष्णुं हृत्सरोजे वसन्तं
दर्भाम्भोभि र्मार्ज्जनं मूर्ध्नि कुर्य्यात् ।
शन्नश्चेतिद्रुपदादी-त्यृचाभ्या
मापोहिष्ठाद्यो ऋतं चेति मन्त्रैः ॥ ९१ ॥
शन्नोमन्त्रस्याम्बुपानुष्टविन्द्रा
मुन्याद्याः स्यु श्चापइत्यस्य भूयः ।
सिन्धुद्वीपानुष्टुभाप स्तथोक्ता:
स्या-द्देतेषां मार्जनार्थे नियोगः ॥ ९२ ॥
आदावनुष्टुब्द्वितयेन कार्य्यो
मूर्द्धादि-सर्व्वाङ्गगतोऽभिषेकः ।
आपोमनूनां नवभिः पदैश्च
त्रिश स्त्रिशः खे शिरसि चितौ च ॥ ९३ ॥
वरयात्मपदे विहायसि स्वशिरस्येव हि सेचयोऽन्तकैः ।
भुवि सान्तपदे स्त्रिभिः क्षिपे-दथ कुर्य्या-दनुनाऽघमर्षणं ॥ ९४ ॥

अघमर्षणतोऽघमर्षणोऽस्य मुनिश्छन्द उदीरितं त्वनुष्टुप् ।
मत मावभृथं च दैवतं हयमेधावभृथे नियोजनं ॥ ९५ ॥
अभिमन्त्र्य पयः करोदरे ऋच मुच्चार्य ततोऽघमर्षणं ।
वहिरान्तरशुद्धये पिवेत् पुन राचम्य वपुः प्रमार्ज्जयेत् ॥ ९६ ॥
वक्ष्यमाणेन विधिना गृह्णीया दासनं ततः ।
पृथ्वि त्वयेति वाक्येन संप्रार्थ्य पृथिवीं द्विजः ॥ ९७ ॥
तारमात्मपदमासनं कमौलानि येनम इति स्मृतो मनुः ।
मेरुपृष्ठऋषि रस्य सौतलं च्छन्द एव कमठोऽधिदैवता ॥ ९८ ॥
अमुनाऽऽसनमाश्रयं-स्ततः प्रणवं ब्रह्मपदं ङयाऽन्वितं ।
हृदयान्त मुदीर्य्य कल्पयेत् पयसा स्वं परितोऽनलावृतिं ॥ ९९ ॥
इत्थं विशुद्धात्मसमाश्रितासनः स्मरे त्तुरीयां मुनिसेवितां मुनिः ।
परेश्वरानुष्टुवुदित्यभिख्यया विन्यस्य मुन्यादिक मेव मात्मनि ॥१००॥
ज्योतीरूपा मर्कचन्द्रोपरिष्ठां
हंसैर्युक्ते व्योमयाने निषण्णां ।
स्वै स्तेजोभि र्दीपयन्तं दिवोऽन्त-
र्ब्रह्मावेद्यां ब्रह्मविद्यां भजामः ॥ १०१ ॥
एवं ध्यात्वा मन्त्रयित्वाऽष्टवारं
पीत्वा तोयं जन्मनो पार्ज्जितानि ।
हत्वा पापान्याशु शुद्धान्तरात्मा
तां गायत्री मभ्यसे दृच्यमाणां ॥ १०२ ॥

इति योगीविन्दकविभूषणमामन्तरायविरचिते सूरिसर्वस्वे
प्रातःकृत्यं नाम सप्तदशसंग्रहः ।

अथ अष्टादशः संग्रहः ।

ततः संचिन्त्य मन्त्रार्थं प्राणायामाय मान्त्रिकः ।
चतुर्णां प्रणवादीनां मुन्यादिन्यास माचरेत् ॥ १ ॥

विष्णुब्रह्मशिवैक मक्षर मिदं ब्रह्मस्वरूपं मतं
यद्विज्ञाः प्रणवं वदन्ति मुनयो वेदादिबीजं च यत् ।
यस्यांशावयवै र्विभक्त मखिलं विश्वं तथा तैजसं
प्राज्ञं चेति गुणत्रयानुगतया जाग्रन्मुखावस्थया (१) ॥ २ ॥

ब्रह्मा गायत्र्यग्निरित्येभि रादौ न्यासं कुर्य्या-द्ब्राह्मणोऽस्यर्षिपूर्व्वं ।
एवंब्रह्मेत्याद्युक्त मुच्चैं रघोघध्वान्तादित्यं ब्राह्मणं तत् पठित्वा ॥ ३ ॥

समस्तत्वद्रजस्तमोगुणात्मनोऽस्य वर्णकान् ।
शितारुणाशिता-न्न्यसेत् स्वनाभिहृत्शिरःसु च ॥ ४ ॥

भूर्भुवः स्वरिति तन्महर्जनं तत्तपो तदनु सत्य मित्यमूः ।
व्याहृतीः प्रणवपूर्व्विका जगु र्योगिनो जगति सप्त-सम्मिताः ॥ ५ ॥

जमदग्नि र्भरद्वाजभृगुगोतमकश्यपाः ।
विश्वामित्रो वशिष्ठश्च सप्तानां मुनयः क्रमात् ॥ ६ ॥

गायत्र्युष्णिगथानुष्टुब्बृहतीपंक्तयः पुनः ।
त्रिष्टुब्जगत्यौ च्छन्दांसि सप्ताऽऽसां कथितानि वै ॥ ७ ॥

---

(१) सत्वगुणेन जाग्रदवस्थया विश्व इति रजोगुणेन स्वप्नावस्थया तैजस इति तमोगुणेन सुषुप्त्यवस्थया च प्राज्ञ इति यस्यांशविभक्तो जीवो व्यपदिश्यते इत्यर्थः ।

सप्तार्च्चि रनिलः सूर्य्यो वाक्पति र्वरुणो ध्रुवा ।
विश्वेदेवा: क्रमा दासां देवता: सप्त कीर्त्तिता: ॥ ८ ॥

एता न्यस्त्वा व्याहृती श्चांघ्रियुग्मे जानुद्वन्द्वे श्रोणियुग्मे च नाभौ ।
वक्ष: कण्ठभ्रूयुगान्तेषु भूयो भूरित्यादि-ब्राह्मणं चाथ गायेत् ॥ ८ ॥

हरि र्हरियुतो भृगु-वितुरिति स्वरूपंवरे
ऽथ वामनयनान्तणोमरवमरुच्च भर्गोऽथ दे ।
सुधा सय भृगुश्च धीमहिधिय: समर्गोमरु-
द्विसर्गयुतनः प्रचो तदनु शौरि रन्ते च यात् (२) ॥ १० ॥

इयं ब्रह्मविद्या प्रदिष्टाऽनवद्या
जगत्-कोटिविख्यातगायत्र्यभिख्या ।
पदैकेन विश्वं वितत्यात्मभूत्या
त्रिभिः पद्भि रेका वरीवर्त्ति लोके ॥ ११ ॥

---

(२) हरिस्तकारः, भृगुः सकारः हरियुतोभृगुः "त्स"कारः ततोवितुः तेन "तत्सवितुरितिलब्धं । ततो "वरे" अनन्तरं च वामनयन मीकार स्तदन्तोणो "णी" इति । खं शून्यं तत्सहितो मरुद्यकारः "यं" इति, तेन "वरेणीयं" इति लब्धं । ततो "भर्गो", अनन्तरं "दे", ततः सुधा "वकारः", ततः यकार सहितो भृगुः "स्य" इति, तेन "देवस्य" इति लब्धं; तदनु "धीमहि" ततोधियो-ऽनन्तरं विसर्गयुतोयकारः यो इति, ततः सर्गयुक्तो नकारः "नः", तेन "धियो-योनः" इति लब्धं; ततः "प्रचो" अनन्तरं शौरिर्दकारः, अन्ते च "यात्" तेन "प्रचोदयात्" इति लब्धं, इत्थं च "तत्सवितुर्वरेणीयं भर्गोदेवस्यधीमहिधियो योनः प्रचोदयात्" इति लब्धं सर्वत्र । अत्रचश्लोके द्वितीयपादे "णः सख" इति भवितुमर्हतीति चिन्त्यं ।

श्रुता ब्रह्मतेज: परं वर्द्धयन्ती
स्मृता सर्व्वपापव्रजं मर्द्दयन्ती।
चणं ध्यानतो ज्ञान मुत्पादयन्ती
जपादष्टभि: सिद्धिभि र्योजयन्ती ॥ १२ ॥

विश्वामित्रोऽस्याऋषि: स्वीयनाम्ना-
च्छन्द: सूर्य्यो देवता वीजशक्ती।
गायं चोर्भ, ब्रह्मवोधे नियोग:
पठेत्तात ब्राह्मणं भूमिरन्तं ॥ १३ ॥

पादद्वन्द्वे जंघयो: श्रोणियुग्मे
नाभौ वक्ष: कण्ठनामाग्रनेत्रे।
भाले मूर्द्धन्येषु मूर्द्धादितश्च
न्यास: कार्य्योऽस्या दशानां पदानां ॥ १४ ॥

आदावनन्तो रदयुक्तशूरो ज्योति: पदं सानलमोऽमृतं च।
ब्रह्मेत्यथ व्याहृतय श्च तिस्र श्चूड़ामनु: सप्तयुगार्ण एष: (१) ॥ १५ ॥

प्रजापति ऋषि र्मतो यजुरनुष्टुभी च्छन्दसी
सरोजजहुताशनानिलदिवाकरा देवता:।
पदानि गुदहृन्मुखे गलहृदंघ्रिनाभौ च कं
न्यसे-त्तदनु तत्पठेत् स शिरइत्यदो ब्राह्मणं ॥ १६ ॥

(१) अनन्त आकार:, रदयुक्तपकार:, "पो" इति। ततो "ज्योति:" पदं ; अनल: रकार:, तत्सहित: सोकार: "रसो" इति, ततोऽमृतं, ततो 'ब्रह्म" पदं, तिस्रोव्याहृतय: भूर्भुव:स्व: इति, चतुर्द्दशाक्षरीगायत्री शिरोब्रह्मेति इति ख्यातोमन्त्र:।

दत्त्वा तारं व्याहृतीनां पुरस्ता-
द्गायत्र्या वै तत्त्ववर्णात्मिकायाः ।
चूडामन्त्रस्यादितोऽन्ते च विद्या
सावित्र्याख्या षष्टिवर्णात्मिकेयं ॥ १७ ॥
एकैकया तदनु पूरककुम्भकाद्यैः
कृत्वाऽनया पवनसंयमनं त्रिकृत्वः ।
अन्तश्चरेतिमनुनाऽऽचमनं विधाय
तोयाञ्जलिं वितनुयाद् द्रुपदादिवेति ॥ १८ ॥
त्रिंशत्कोटिमिता विरञ्चिशपथान्मन्देहनामासुरा
नित्यं प्रात रहस्करं प्रहरणै रुन्धन्त साघ्नन्ति वै ।
तान् हन्तुं सलिलाञ्जलित्रय मतो दद्या त्तदा ब्राह्मणो
गायत्र्याऽस्य विमुक्तयेऽनुदिवसं हन्त्यन्यथा भास्करं ॥ १९ ॥
उदित्यमित्यादिऋचां त्रयस्य प्रस्कन्दकौत्साकुणयो मुनीन्द्राः ।
गायत्रिकात्रिष्टुबनुष्टुभश्च च्छन्दांसि देवो मिहिरः क्रमेण ॥ २० ॥
विन्यस्यैता नुत्थितो बद्धहस्तो
निक्षिपेदर्कं व्योम्नि तोयाञ्जलिं च ।
सोऽयं ब्रह्मादित्य एवेतिबुद्ध्या
तै ऋक्पाठैश्चोपतिष्ठेत सूर्यं ॥ २१ ॥
अथासन मुपाविशन् प्रथम मुद्गरेत् शापतो
द्विजो निगममातरं सपदि वक्ष्यमाणाध्वना ।
पुरा किल विरञ्चिना तदनु सा वशिष्ठेन च
स्वयं कुशिकसूनुना ऽभिमतदाऽपि शप्ताऽ भवत् ॥ २२ ॥

तस्मात् मोदकताम्रभाजन इमा मावाह्य मुन्यादिकं
न्यस्त्वा शापविमोचनस्य विधिव द्विद्यां प्रयोगोचितां।
उक्त्वा गन्धजवाकुशाक्षतलसत्तोयाञ्जलिक्षेपणै
स्तद्दोषं परिहार्य्य ता मथ जपेत् मंदश्चर्ते तद्विधिः॥ २३॥
योऽस्याः (१) शप्ता तस्यविमोक्त्रि स ऋषिः स्या-
द्वाग्दोहाद्या कामदुघाद्या मह्रदाद्या।
गायत्त्रेव च्छन्दसि शप्ता शपतां सा
तेषा-मेवानुग्रहशक्तिः खलु देवी॥ २४॥
तत्तत्शापविमोचने विनियमं कृत्वाऽथ षड्दोषव-
द्दर्णाद्येन षडङ्गकानि च हृदि प्रोक्तस्वरूपां स्मरेत्।
तारव्याहृतितारपूर्व्वक मदः पादत्रयं सध्रुव-
क्रौं यूं जोवमनूत्यवर्णपुटितं ब्रूयात् क्रमानुक्रमं॥ २५॥
प्रत्येकतः श्रौतमनुत्रयान्ते देवि त्व मस्मादमुकस्य शापात्।
मुक्ता भवेत्यम्बुनि कल्पितेऽब्जे क्षिप्त्वाऽञ्जलिं तत्र जलं निहन्यात्॥२६॥
गायत्रीं ब्रह्मेति ऋचा ब्रह्मशापा दग्नि र्ज्योति श्चेति तत्पुत्रशापात्।
गायत्रोमित्युक्तया गाधिसूनोः शापा-द्देवीं मोचयत्येव सत्यं॥ २७॥
ऋचोयथा। गायत्त्रीं ब्रह्मेत्युपामितं यद्रूपं ब्रह्मणो विदुः।
ता सु पश्यन्ति धीरा मनसा वाच मग्रतः॥ २८॥
ओं गायत्त्रीं भजाम्यग्निमुखीं विश्वगर्भां यदुद्भवा श्चक्रिरे विश्वसृष्टिं।
तां कल्याणी मिष्टकरीं प्रपद्ये यन्मुखा-न्निःसृतोऽखिलवेदगर्भः॥ २८॥

(१) योऽस्य इति (व) पुस्तके।

अग्निर्ज्योति रहं शुक्लं शुक्लं ज्योति रहं शिवः ।
आत्मज्योति रहं शुक्रं सर्व्वज्योति रसौ महान् ॥ ३० ॥
सोऽह मर्कं महं ज्योति रर्कज्याति रहं शिवः ।
आत्मज्योति रहं शुक्लं सर्वज्याति रसोऽहमां ॥ ३१ ॥ इति ॥
ततो जलमुपस्पृश्य त्रिगममातु ऋष्यादिकं
षड़ङ्गमपि भूर्भुवः स्वरिति तेश्च पादै स्त्रिभिः (१) ।
पदान्यपिच पूर्व्वव द्वपुषि विन्यसे द्ब्रह्मवि-
ष्णुधूपमचतुर्मुखान्यमलपद्मसंस्थानि च ॥ ३२ ॥
हेमाम्भोजपिशङ्गकज्जलरविज्योत्स्नासुतारानल-
श्यामाशन्यशितातिशुक्लकनकाम्भोजारुणाच्छप्रभान् ।
वर्णान् कुन्दतमाल रुक्मरुधिरस्वर्णावदातामल-
प्रोद्यत्सूर्य्यनिभान् विचित्रवसनान् पद्मासनस्थां स्ततः ॥ ३३ ॥
पादाग्राङ्गुलमूलगुल्फनिलये जान्वो स्तथोर्व्वोः शिवे
नाभौ हृद्गलबाहुयुग्मककुदास्याघ्राणगण्डाक्षिषु ।
कर्णभ्रूयुगमध्यमूर्द्धि च पुनः पञ्च न्यसे दन्तिमान्
पश्चादुत्तरपूर्व्वयाम्यवदनेषू र्द्धानने साधकः ॥ ३४ ॥
स्फुरत्शशधरप्रभैः प्रणवपूर्व्वपादै स्त्रिभि
र्न्यसेच्च वपुषि त्रिशः करयुगेन सव्यापकं ।
अचञ्चलमना स्तत स्तरणिबिम्बमध्यस्थितां
स्मरेत् प्रणवसंयुतां सशिरसं च सव्याहृतिं ॥ ३५ ॥

---

(१) निसृभिर्व्याहृतिभिर्गायत्र्याविभक्तैस्त्रिभिः पदैश्च षड़ङ्गानि न्यसेदित्यर्थः ।

सूर्य्यान्तर्विम्बवर्त्ती कनकमयसटाश्मश्रुलोमाङ्गलक्ष्मीः
शोणाम्भोजायताक्षः सुकपिशवसनः स्वर्णपद्मासनस्थः।
मञ्जीराद्यूर्मिकाञ्चीवलयगलभुजाकल्पकोटीरनिष्कै
र्युक्तः शङ्खारिपाणिः स्फुरतु हृदि मम प्राणवः पूरुषोऽसौ॥ ३६॥
तारस्य सप्तविभवैः परिचीयमानं
मानै रगम्य मनिशं श्रुतिमौलिमृग्यं।
सम्वित्प्रमस्तग मनश्वर मच्युतं त-
त्तेजः परं स्फुरतु सान्द्रसुखाम्बुराशि॥ ३७॥
राकापीयूषरोचिःशतरुचिरुचिरा चारुमाल्याम्बरस्रग्-
भूषाढ्या साक्षसूत्रामृतरसविलसत्कुण्डिकां संदधाना।
वेदाना मादिमाता सकलमुनिजनैः सेविता शुद्धसत्वा
गायत्री मे पुरस्तात् स्फुरतु सहृदया सर्व्व तत्त्वस्वरूपा॥ ३८॥
मुक्ताविद्रुमहेमनीलधवलच्छायै र्मुखै स्त्रीक्षणै
र्युक्ता मिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकां।
सावित्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं
शङ्खं चक्रगदारविन्दयुगलं हस्तै र्वहन्तीं भजे॥ ३८॥
ततः सन्ध्या ध्येया दहनवदना शङ्करशिखा
सदा सूर्य्यान्तस्था नृहरिहृदया ब्रह्मकवचा।
स कौण्डिन्यो यस्याः प्रवर, उत सांख्यायनकुले
प्रसूता या रक्तामलमलिनरूपाणि भजते॥ ४०॥
प्रातःसन्ध्या कुमारी करकलितस्रुवस्रुक्करङ्काक्षदण्डा
रक्तस्रग्गन्धभूषाम्बररुचिरतनू रक्तपद्मासनस्था।

ब्राह्मी हंसाधिरूढ़ा मुनिमनुजसुरै रर्चितर्ग्वेदयुक्ता
गायत्त्रीतिप्रसिद्वा मणिमुकुटलसद्देदवक्त्रा द्विनेत्रा ॥ ४१ ॥
माध्याह्नी यौवनस्था विषदमलयजस्त्रग्विभूषांशुकाढ़्या
श्वेताजस्था चतुर्भि र्वदनसरसिजै: सद्विनेत्रै र्विभान्ती।
सावित्र्याख्या सचक्राम्वुजजलजगदा वैष्णवी वैनतेया-
रूढ़ा गूढ़ा समस्तश्रुतिपथपथिकै: संप्रयुक्ता यजुर्भि: ॥ ४२ ॥
सायंसन्ध्या च वृद्वा सितत्तरवसनस्त्रग्विलेपाङ्गभूषा
कृष्णाम्भोजान्तरस्था सशशिकलचतुर्वक्त्रपद्मा त्रिनेत्रा।
शूलाक्षस्त्रक्कपालं डमरु मपि करै: सन्दधाना सरस्व-
त्याख्यातोक्षाधिरूढ़ा सुरनरविनुता शाम्भवी सामयुक्ता ॥ ४३ ॥
ध्यात्वेत्थं कुसुमाक्षतै: स सलिलै स्ताम्रपात्रेऽथवा
यन्त्रे ता मनुचिन्त्य वेदजननीं तेजोऽभिमन्त्रादनु।
आयाहीत्यभिवाह्य तत्र मनसा संपूज्य मन्त्रं जपे-
दासूर्य्योदय मूर्द्ध्वतिर्य्यगवनन्नास्येन दोषा क्रमात् ॥ ४४ ॥
जपान्ते पुनस्तां विचिन्त्यार्पयित्वा
जपं प्राणरोधं त्रिश: संविधाय।
पुन र्याहिदेवीति तां सूर्य्यविम्बे
समुद्वास्य तं सूर्य्य मर्च्चे ज्जलान्त: ॥ ४५ ॥
ओँ हंस: शुचिसद्दच: पदैस्त्रिषड्भि
स्तोयान्त र्जलरुहकर्णिकां दलानां।
सन्ध्याद्याख्यय परितोऽनुकल्प्य वृत्तं
तत्राघं दिवसकृते नमे न्निवेद्य ॥ ४६ ॥

नम: सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने ॥ ४७ ॥

अथ तान्त्रिक एष तान्त्रिकीं
मिह सन्ध्यां विधिना समाचरेत्।
विफला हि भवन्ति यां विनाऽ
खिलमन्त्रा बहुशोऽपि सेविता: ॥ ४८ ॥

आचम्यावाह्य तोये निजमनुजपत स्तीर्थवृन्दं तदम्भ:
क्षिप्त्वा दर्भै स्त्रिवारं भुवि पुन रमुना सप्तशो मूर्द्धि सिञ्चेत्।
वामेनादाय किं चि त्तदपि च मनुना दक्षिणे मन्त्रयित्वा
भूयो वामे गृहीत्वा निजशिरसि कुशै स्तेन सिञ्चे-त्त्रिकृत्व: ॥ ४९ ॥

ततोऽञ्जल्यानीतं गुरुभि रुपदिष्टेन विधिना
शनैर्नाड्याऽऽकृष्याऽग्निमय मुदरं नीर मिड़या।
स तेनान्तर्दोषं सपदि परिमृज्यान्यशिरया
विनिष्कृष्यासव्यस्तुतकुलिशरूपोपलतले (१) ॥ ५० ॥

तत: क्षिपे-दूर्द्ध्व सवञ्जलित्रयं कृत्वा मरुत्संयम सङ्गजेन (२) च।
सकृत्त्रस्वस्त्रस्वसंख्यकेन त-द्विधानतो रेचकपूर्व्वकं क्रमात् ॥ ५१ ॥

(१) विनिक्षिपन्नस्त्रजपेन चात्मनं विधाय कृत्वेत्यघमर्षणं सुधी:।
वाह्यान्तराघौघनिकृन्तनं परं विशुद्धतामेति जपादिकर्म्मसु ॥
इत्यधिकं (ग) पुस्तके।

(२) संगवेन च इति (व) पुस्तके पाठ:।

ङेऽन्तौ कृत्वा कृष्णदामोदरौ द्वौ
संयोज्यान्ते विद्महे-धीमहिभ्यां ।
तन्नोविष्णुः प्रेत्यथो चोदयाद्वै
गायत्र्येषा वैष्णवी सम्यगुक्ता (१) ॥ ५२ ॥
सर्व्वेषा मिष्टदात्री सकलसुरमयी सर्व्ववेदैकधात्री
युक्ता तारेण मुक्तिं जनयति रमया भोगसंपत्ति मेषा ।
क्लींवीजेनार्थसिद्धिं सुललितकवितां वाग्भवेनाऽथ सम्यक्
सौभाग्यं कामवीजेन च सकलयतोच्चारणात् कृष्णभक्तिं ॥ ५३ ॥
अस्याऋषिः कमलयोनि रनुष्टुभाख्यं
छन्दोऽथ विष्णुहृदयाखिलशक्ति रीशा ।
स्याद्देवता स्मररमे खलु वोजशक्ती (२)
धर्म्मार्थमोक्षविषये विनियोग उक्तः ॥ ५४ ॥
कृत्वाङ्गानि पदैस्त्रिभि द्विरुदितै र्न्यस्वा पदान्यानने
कण्ठे हृद्यथ वाहुतुन्द जघने जानुद्वये पद्द्वये ।
ध्याय-त्तारकिते नभस्यविकलं ब्राह्मी-पुरोक्ताऽध्वना
तवस्थां तदभेदतो भगवतीं तां वैष्णवीं वैष्णवः ॥ ५५ ॥
उद्यद्दिवाकरनिभां तपनीयवर्णां
कृष्णाजिनोत्तरदुकूलवृताङ्गवल्लीं ।
विश्वोदरां विकचपुष्करपुष्कराक्ष
मालाधरां परमहंसितु रादिशक्तिं ॥ ५६ ॥

---

(१) ओं कृष्णाय विद्महे दामोदराय धीमहि तन्नोविष्णुः प्रचोदयात् इति ।
(२) क्लीं वीजं । श्रीं शक्तिः ।

प्रात र्ब्रह्मयाऽथ मध्याऽरुणरुचि रभयाऽक्षस्रजौ धारयन्ती
हंसारूढा दिनार्द्धे दरनलिनगदाचक्रभृत् श्यामवर्णा।
तार्क्ष्यारूढा च सायं वरकरकयुतौ शूलपाशौ दधाना
शुक्ला वश्या वृषस्था जपविधिमहितं पूर्ब्बवत् सर्ब्बं सूत्रं ॥ ५७ ॥
इत्थं सन्ध्या मयोक्ता गुरुकुलवचना द्वैदिकी तान्त्रिकी च
ते चोभे साधकाना मभिमतफलदे स्वान्तशुद्धिप्रदे स्तः।
यत्त्यागा द्ब्राह्मणानामपि शतशतशो मन्त्रसंजापकानां
सिद्धि र्न स्या द्विशेषा द्दनतनयहृति र्हन्त पातित्यमेव ॥ ५८ ॥
समित्समिद्धेऽथ सुसंस्कृतेऽनले
स्रुवेण दद्या द्धविषाऽऽहुतिद्वयं।
ध्रुवादिकं ठद्वयपश्चिमं रवि-
प्रजापतिभ्या मथवा जलाञ्जली ॥ ५९ ॥
ततः स्ववस्त्रं परिशोधयेत् सुधी
र्विधीयतेऽतोऽंशुकशुद्धि रादरात्।
यया विशुद्धं वसनं दिने दिने
पिधीयते कर्म्मसु कर्मठै र्नरैः ॥ ६० ॥
कार्पासं वसनं नरोऽनुदिवसं क्षारोदकैः क्षालयेत्
कौषेयं विमलोदकैः श्च मलिनं काषायकं मृज्जलैः।
वल्कं विष्णु मनुस्मरन् सुपयसा संप्रोक्षये च्चाजिनं
संप्रोक्ष्याऽखिल कम्बलादिक मथो वातेन चाऽऽस्फालयेत् ॥ ६१ ॥
विष्ण्वादि-देवप्रतिमादिकानां महीपतीनां व्रतिनां यतीनां
नित्यं दुकूलं परिशोधनीयं मलाचितं सद्वसनं परेषां ॥ ६२ ॥

विरम् व रेतोरुधिराक्त-वस्त्रं प्राङ्मृज्जलै र्मार्जनवि-द्विमृज्य ।
क्षारोदकै रुष्णजलैर्विपाच्य प्रक्षालये-न्निर्मलनीरपूरैः ॥ ६३ ॥
योषिद्रजो-विलुलितं नवगोमयेन
निर्मृज्य मृज्जलचयेन च शोधयित्वा ।
पक्वाऽथ उष्णसलिले ज्वलनेन भूयो
निर्णेजकेन विधिवत् खलु शोधनीयं ॥ ६४ ॥
श्वकाकविट्शूकरकुक्कुराद्यै र्नीचान्त्यजव्रात्यपशूपमैश्च ।
स्पृष्टं दुकूलं सलिलेन सद्यः प्रक्षालये-न्नूतन मप्यथैवं ॥ ६५ ॥
शय्योपधानादि परिच्छदं यद्वस्त्रं तथा यद् यदिहोपभोग्यं ।
सर्व्वं परेद्युः परिशोध्य नीरैः स शोषये-त्तेन तदेति शुद्धिं ॥ ६६ ॥
इत्थं नरो यः परिशोध्य वस्त्रं नित्यं पिधत्तेऽखिलकर्म्मनिष्ठः ।
तस्यास्ति शुद्धि र्न तथेतरस्य स्मृतिप्रसिद्धं खलु वाक्य मेतत् ॥ ६७ ॥
इत्थं विशोधितपट स्तटतः सरस्या
निर्गत्य दैवत मपि स्नपये-न्निशान्ते ।
सूर्य्योदयावधि यदि प्रतिमासु तिष्ठे-
न्माल्यादि पर्य्युषित माशु तुदत्ययोवत् ॥ ६८ ॥
तस्मात् प्रातःस्नानतः पूर्व्वमेव पूजार्च्चानां पूर्व्वमाल्याम्बराद्यं ।
दूरे क्षिप्त्वा वस्त्रयुग्मं पिधाय स्नानं पश्चात् कारये दुच्यते तत् ॥ ६९ ॥
दूरोज्झितान्त्यजरजस्वलयोषिदादि
पाषण्डनग्नसमवेक्षणसङ्गसूक्तिं ।
विष्णोर्गुणा ननुरटन्-नुपचारयुक्तो
देवं विबोधयितु मिष्ट मिया त्तटोकः ॥ ७० ॥

काहाल-शङ्ख-मुरजानकमर्द्दलाद्यै
र्वाद्यैः प्रभो जयजयेति वचोऽतिहृद्यैः ।
सर्पिः सुगन्ध-तिलतैल-सुदीप्त-दीपै
र्द्वारि प्रविश्य वचसा प्रतिबोधये-त्तं ॥ ७१ ॥

हे देवासुरसिद्धकिन्नरशिरःकोटीर-कोटिस्फुर-
द्रत्न-द्योतितपादुकाखिलगुरो देवाधिराज प्रभो ।
प्रातः संप्रति जात मुञ्च शयनं निद्रां जहीहि क्षणं
कारुण्यामृत-पूरपूरित-दृशा दीनान् पुनीहो श नः ॥ ७२ ॥

एवं विज्ञाप्य देवं स्फुट सर सरसं मोचये-द्रोचमाना
मर्च्चा मालोक्य सूच्चारितनुतिनतिभिः संस्तुयात् प्राक् प्रसाद्य ।
देहल्याश्वाथ सुप्ता मृजुतनु मतनूत्तुङ्गवक्षोजनम्रां
धूम्राभां कालरात्रिं स्फुटविकटमुखीं प्रार्थये-दत्तशीर्षां ॥ ७३ ॥

देवि सर्व्वभयविघ्ननाशिनि कालरुद्रहरमस्तकाशिनि ।
कालरात्रि कलयामि ते पदं देहि मार्ग मज सर्च्चयाम्यहं ॥ ७४ ॥

पृष्ठनाथो संश्रयेद्वामशाखां संकोच्याङ्गान्युत्तरे दत्तमार्गां ।
देवीं तां नोल्लंघये ल्लंघयेद्द्वाग्द्वारं धीरो दक्षिणेनांघ्रिणा सः ॥ ७५ ॥

अन्तर्य्यामिन्नन्तरास्थाय* सम्यक् सेवार्थे ते यत्त्वयाऽहं नियुज्ये ।
कुर्व्वे सर्व्वं तत्तथा मास्तु कश्चि त्त्वद्दश्यत्वा-द्वलनोत्थोऽपराधः ॥ ७६ ॥

---

* ततः प्रविश्यान्तरगारमीश्वरं प्रदक्षिणीकृत्य विनम्र मौलिना ।
पुनर्नमस्कृत्य निवेदयेत्त्रिया सेवाकृताघःशमनाय साधकः ॥ ७६ ॥

इत्यधिकः श्लोकः ( ख ) पुस्तके ।

ततो देवस्य संस्पृश्वा कराग्रेण पदाम्बुजं ।
कृतार्थोऽस्मीति संभाष्य नीराजयितु मारभेत् ॥ ७७ ॥

निर्य्यन्मिलिन्दनिचयामलयामुनेय-
प्रातः सरोजसदृशं वदनं तवेदं ।
व्यस्तालकालितिलकं च विघुर्णिताक्षं (१)
नीराजयाम्यऽनुगृहाण विभो स्मितेन ॥ ७८ ॥

इदं वदं स्तद्वदनं शनैः शनै र्नीराजयेत् सप्तभि रिद्धवर्त्तिभिः ।
वहि र्नयेत्तत् शयनीय मग्रत स्तदङ्गतोऽप्याभरणांशुकस्रजः ॥ ७९ ॥

देवं कृत्वा सोत्तरीयैकवस्त्रं
सद्यो नीरैः क्षालयित्वाऽग्रभूमिं ।
संस्थाप्याग्रेः स्नानयोग्योपचारान् (२)
कुर्य्या-त्तत्र स्नान-पूजां विधिज्ञः ॥ ८१ ॥

निनाद्य घण्टा मथ संस्कृतासनः
कृताऽऽसनर्घ्यादि-विधि स्तितालकृत् ।
क्रमात् ककुद्दन्धनभूविशोधनं (३)
समाप्य भूयोऽनिल-संयमं चरेत् ॥ ८१ ॥

---

(१) निर्गच्छद्भ्रमरनिचयो यस्मात्तादृश निर्म्मलं यद् यामुनेयं यमुनाभवं प्रातः पद्मं, तत्तुल्यं यतो व्यस्तालकालितिलकं विघुर्णिताक्षं इति काव्यलिङ्गानुप्राणितो पमालंकारः। अत्र मुखस्यालकाश्यामिकया यामुनपद्मसाम्यं, विघूर्णिताक्षतयाच निर्य्यन्मिलिन्दत्वमुपपादित मित्यवधेयम् ।

(२) पाद्यामोदकादिकान् । (३) दिग्बन्धनभूतशुद्धी ।

न्यस्त्वा चान्तर्वाह्यतो मातृकार्णान् सामान्यार्घं वक्ष्यमाणक्रमेण।
संपाद्याङ्गं तेन संप्रोक्ष्य वक्ष:पद्मे (१) शक्तिं पीठमन्त्रं यजे च ॥ ८२ ॥

मुन्यादिकं मूलमनो विधाय
संपूज्य देवं मनसोपचारै:।
वहि: समावाह्य विचिन्तये त्तं
सुसोत्थितं दर्शित-मर्त्यलीलं (२) ॥ ८३ ॥

दत्त्वासनं दशन शोधनिकां पयोभि
र्गण्डूष मङ्गपटवासविलेपनानि।
स्नानीयनीरवसनाभरणानि गन्ध-
स्रग्गभकादिभि रथो रचयेत् सुवेशं ॥ ८४ ॥

चित्रार्चानां मृण्मयीणां च सर्व्वं वृत्तादर्शे (३) स्नानकृत्यं विधेयं।
अन्यासां तु स्वेषु देहेषु चास्मिन् कृत्यं वक्ष्ये प्रार्थनानुक्रमेण ॥ ८५ ॥

मणिपादुकयो: पदाम्बुजे (४) करुणानीरनिधे निधेहि भो।
पुरट-स्फुट-पीठकुट्टिमं (५) प्रविश स्नानवितर्द्दिमध्यगं ॥ ८६ ॥

हिमवालुकया सुवासिते हिमनीरै हिमरश्मिभासितै:।
परिमृज्य मुखाब्जिपङ्कजा-न्यमुना चाऽऽचमनं विधीयतां ॥ ८७ ॥

विशुद्धजाम्बूनदनद्धमध्यया प्रशस्तया वासितयाऽतिसिध्यया।
शलाकया तूलिसुकोमलाग्रयाऽनया दयार्थ्य दशनान् विशोधय ॥८८॥

(१) हृत्पद्मे। (२) मनुष्यलीलादर्शयन्तम्।
(३) शङ्कुशलाकोपरिस्थित दर्पणे।
(४) पादपद्मद्वयं। (५) सुवर्णकुट्टिमस्थानं।

नवकाञ्चननिर्म्मितया भगवंस्तव पाणिपुटे च मयार्पितया ।

अरिराजितपाणिसरोज(१) शनैः परिशोधय बोधतनो रसनां ॥८९

मन्दं मन्दं चन्दनस्यन्दपूरै रभ्यज्याङ्गान्यङ्गते (२) मङ्गलानि ।

स्निग्धैः पिष्टै र्लेपनोयै र्विशिष्टै र्निर्लेप त्वां लेपयामीश भूयः ॥ ९० ।

सार्द्धत्रिकोटिप्रमितानि यानि तीर्थानि सन्तीह वसन्ति लोके ।

तैः स्नान मङ्गे कलयामि तव पवित्रमूर्त्ते भवतोऽवधेयं ॥ ९१ ॥

जाग्रन्नीलाम्भोरुहस्पर्शवत्ते वर्ष्म श्रीमन्निर्म्मलैश्चारुचेलैः ।

आपादाग्रं प्रोञ्छयामि क्रमेण साङ्गोपाङ्गं सावधानेन भाव्यं ॥ ९२ ।

सुरम्यमाणिक्यघटीमदुत्तमं

विशुद्धचामीकरचारुकान्तिमत् ।

कटौ तवेशाऽऽप्रपदीन (३) मम्बरं

त्रिकच्छ मच्छं परिधापयाम्यहं ॥ ९३ ॥

तादृशं सदृश मुत्तरीयकं नीरदत्विषि तनौ तडिद्भ्रमं (४) ।

विभ्रदम्बुजदलेक्षण क्षणादुत्तरं वपुषि वस्तु (५) मर्हसि ॥ ९४ ॥

सरोजजेन त्रिगुणाकृतिं (६) पुरा स्वयं भवद्भि र्ग्रथितं पुरातनं ।

पिनाकिनापि प्रणयेन मन्त्रितं यज्ञोपवीतं परिकल्पयामि ते ॥ ९५

(१) चक्रशोभितपाणिपङ्कज ।

(२) हे अङ्ग इति सम्बोधनं ।

(३) पादाग्रावधिलम्बमानं ।

(४) तडित्प्रभमिति (ग) पुस्तके पाठः समीचीनः ।

(५) वस्तुमर्हसि इति (ग) (घ) पुस्तकयोः पाठः ।

(६) त्रिगुणीकृतं इति (ग) पुस्तके ।

मूर्द्धि श्रीमन् कनकमुकुटं कर्णयोः कुण्डले द्वे
कण्ठे हारं तव मणिमयं कौस्तुभं चारुनिष्कं ।
पाण्यो र्व्वाह्वो रुचिरवलयान्यङ्गदे चाथ कक्षां
काञ्चीमालां तव पदयुगे नूपुरावर्पयामि ॥ ९६ ॥
भालं चन्दनचित्रकेन रुचिरं ते चर्च्चयामि प्रभो
वक्ष श्चाऽक्षययक्षकर्द्दमरसैः कस्तूरिकाभि र्गलं ।
दोर्द्दन्द्वं हरिचन्दनेन रुचिराण्यङ्गानि शेषाण्यथ
श्रीखण्डादिचतुःसमेन च यथाशोभं शुभं योजय ॥ ९७ ॥
मूर्द्धि गर्भकमिदं मनोरमं दिव्यनव्यसुमनःस्रजा हृदः ।
आपदान्त मुपकल्पिता मयाऽनुग्रहो मयि विधीयतां विभो ॥ ९८ ।
मणिमयमुकुरे मुकुन्द मन्द-
स्मित रुचिरञ्जित मङ्ग मङ्गलं स्वं ।
मुख मनुपश्यत एष ते मुदे स्ता-
द्विरचितवेश-विभावना विशेषः ॥ ९९ ॥
इत्यादर्शं दर्शयित्वा पुरस्ता-द्भूयो नत्वा चालयित्वाऽग्रभूमिं ।
नीराज्यामुं तव सेवाऽपराधक्षान्त्यै देवं प्रार्थये देव मुच्चैः ॥ १०० ॥
छायापाते र्व्वाष्पनिःश्वासपाते
र्गात्राकर्षे र्व्वामहस्ताभिमर्शैः ।
येऽन्येऽभूवन् हेलया वाऽपराधा
स्तत् सर्व्वं मे क्षाम्यतां (१) दीनबन्धो ॥ १०१ ॥

(१) क्षम्यतामिति (ख. पुस्तके ।

द्वारेषु दौवारिकदेवतानां प्रासादपार्श्वप्रतिमादिकानां।
देवाग्रयूपस्थितवाहनस्य स्नानादिकं तद्वदथो विदध्यात्॥ १०२॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्व्वस्वे निशान्तकृत्यं नामाष्टादशः संग्रहः॥ * *

## ऊनविंशः संग्रहः।

इत्थं मार्जनमज्जनादि विधिवन्निर्व्वाह्य बाह्ये ततः
स्थाने कुत्रचनेतरत्र रहसि चैत्ते पवित्रेऽथवा।
पीठे स्वास्तृत आसनं सरसिजाद्यास्थाय सुस्थाशयः
स्रग्भि र्व्वाङ्गुलिपर्व्वभि स्त्वभिमतां विद्यां जपेत् पूर्व्ववत्॥ १॥

गायत्र्यादौ मन्त्रजप्येषु जप्या
पश्चाज्जप्यः स्वेष्टमन्त्रो यथेच्छं।
एवं नित्यं कुर्व्वता कर्म्म जाप्यं
नैरन्तर्य्योऽनुष्ठित स्तद्विधिः स्यात्॥ २॥

कृत्वासनादितनुशोधक्रमात्कान्तं
न्यस्त्वा पुरोक्तविधिनाऽङ्गपदाक्षराणि।
सौरं समर्च्च्य हृदये सह शक्तिपीठं
तस्मिन् स्मरे-न्निगमसारमुक्तरूपां॥ ३॥

संस्थाप्यार्घं तत्समर्प्योपचारा-
नग्रे ताम्रे भाजने यन्त्र मस्याः।
पीठार्च्चान्ते तां समावाह्य तत्र
प्राणान् संस्थाप्याथ मुद्रां विदध्यात्॥ ४॥

सम्मुखसंपुट विस्तृतविततान्येकमुखद्विमुखत्रिमुखानि ।
चतुरिषुषड़धोयुतमुखसंज्ञान्यूर्द्धाञ्जलिकशकटयमपाशाः ॥ ५ ॥
ग्रथितं तदनुसम्मुखोन्मुखं मत्स्यकच्छपवराहमुष्ठिकं ।
सिंहपूर्व्वमहदादिकं पुनः क्रान्तसंज्ञ मथ मुद्गराह्वयं ॥ ६ ॥
पल्लवं निगदितं ततोऽन्तिमं वेदमातु रतिहर्षदा इमाः ।
मुद्रिकाः कलुषमुद्रिका श्चतुर्विंशति निगदिताः समासतः ॥ ७ ॥
ततः सुप्रसन्नां सरोजे निषस्नां
स्फुरद्देववर्णां स्मरेत्तां त्रिवर्णां ।
क्रमाद्दर्शयित्वा पुरस्ता च मुद्रा
निवेद्योपचारा न्निवेद्यान्त मस्यै ॥ ८ ॥
यजेत्त्रामपूर्व्वादितस्थानसंस्थान् सगन्धाम्बुपुष्पाक्षते रक मेकं ।
असुष्यां पदान्यक्षरांश्च क्रमेण स्फुटं मूर्द्धि तद्वत्तुरीयं पुरोक्तं ॥ ८ ॥
ततो यजेदावरणानि दिङ्मिता-
न्यादौ त्रिकोणेष्वरुणामलासिताः ।
ब्राह्मी च वैष्णव्यथ शाम्भवीति च
त्रिशक्तयोऽर्च्या निजरूपवृंहिताः ॥ १० ॥
अदिति श्च दितो रमा तथामा रति रार्य्येति षड़स्त्रिषु द्वितीये ।
रसकोणवहिस्तदग्रतोऽङ्गान्यथ षट् पूर्व्वदरि-क्रमा त्तृतीये ॥ ११ ॥
प्रह्लादिनी प्रभा सत्या सीता विश्वम्भरा जया ।
विलासिनीप्रभावत्यौ चतुर्थे केशरेष्विमाः ॥ १२ ॥
कान्ता दुर्गासरस्वत्यौ विद्यारूपा विशालिका ।
व्यापिनीशा च विमला पञ्चमे पल्लवेष्विमाः ॥ १३ ॥

तमोऽपहारिणी सूक्ष्मा विश्वयोनि र्भयापहा।
पद्मशोभापरापद्मरूपा षष्ठ दलाग्रगाः॥ १४॥
ब्राह्मी माहेश्वरी भूयः कौमारी वैष्णवी तथा।
वाराह्यैन्द्री च चामुण्डा लक्ष्मी वृत्ते च सप्तमे॥ १५॥
रवि रिन्दुः कुजः सौम्यो गुरुः शुक्रः शनैश्चरः।
राहुश्चैतेऽष्टमे भूमिवेश्मयुग्माग्रतो बहिः॥ १६॥
इन्द्रोऽग्निः शमनो रक्षः पाशी वायु र्धनाधिपः।
ईशानो विश्वसृक् शेषो नवमे तद्बहि स्त्विमे॥ १७॥
वज्रं शक्ति श्च दण्डोऽसिः पाशः सृणि र्ध्वजो गदा।
त्रिशूलं पद्मचक्रे च दशमे तद्बहिः पुनः॥ १८॥
इत्थं सन्तोष्य देवीं जप मथ विधिनाऽऽचर्य्य संकल्पसंख्यं
गुह्यातीत्यर्पयित्वा त्रि रनिलयमनं संविधायाष्टमुद्राः।
धेनुज्ञानारिलिङ्गाम्बुजभगदरनिर्व्वाण संज्ञा जपान्ते
संदर्श्येमां च याहीति सपदि विसृज त्रिष्टमन्त्रं जपेच्च॥ १९॥
सहस्रं शतं वा समर्प्याथ जाप्यं यथाशक्तित स्तोत्रवर्गार्गलादि।
अधीत्याथ नित्यार्च्चनोद्युक्तचेताः समाहृत्ययन्त्रादिकं चापगच्छेत्॥२०
शक्तेर्वाह्यकृशानुकोण विलसद्भूरादिषट्कोणकं
वस्वब्जं स्वरयुग्मकेशरयुतं वर्गैस्त्रिवर्णैर्मनोः।
चूडामन्त्रतुरीयवेष्टितमिदं क्ष्माकोणताराङ्कितं
गायत्र्याः कथितं महत् प्रभृतिभि र्यन्त्रं (१) विदिक् संज्ञितं॥ २१॥

(१) महत्प्रभृतिभिरिति ख॰ पुस्तके।

अस्मिन् यन्त्रे काम्यकर्म्माणि कुर्य्या-
दावाह्येमां पूजयेत् पूर्व्वरीत्या ।
स्वं स्वं कामं कल्पये स्वचसातं
तां गायत्रीं संजपेत्-संयतात्मा ॥ २२ ॥
जपाद्दशांशं जुहुयात्-प्रणीते हुताशने गव्यघृतेन नित्यं ।
दीर्घायुषे मावतिलै घृताक्तै दुर्व्वांविकै दुर्गतिरोगशान्त्यै ॥ २३ ॥
संपदे त्रिमधुरारुणाम्बुजै ब्रह्मवृक्षकुसुमै द्विजश्रिये ।
वृष्टये सघृतवैतसेन्धनै: पुष्टये चरुभि रिष्टसाधितै: ॥ २४ ॥
वहुना किमिहोदितेन विद्या-
द्विजवर्य्यै: खलु साधिता यदि स्यात् ।
भुवि कामदुघेव कस्य किंवा
कुरुते नेय समग्रोघनाशहेतु: ॥ २५ ॥
अथेष्टसुरपूजनं प्रथयितं तदङ्गाङ्गिता-
क्रमादिह विचार्य्यते सममयव्यवस्थापिच ।
व्यतिक्रमतयास्थिता दृढ़धियाप्यकालेऽर्च्चिता:
फलं न ददते सुरा: किमपि न प्रसीदन्ति च ॥ २६ ॥
अङ्गीष्टदेव: खलु पूजनीय: प्रासादमध्ये निजयन्त्रपीठे ।
ईशानकोणादिषु ये तदङ्गभूतासुरा स्ते परिपूजनीया: ॥ २७ ॥
विष्णावङ्गिनि शङ्करैकरदनार्कास्तास्त्र्यम्बकाङ्गाग्रजे
विष्णूर्क्ककरदाम्बिका गिरिभुवि श्रीशेशविघ्नारुणा: ।
विघ्नेशे हरिशम्भुसूर्य्यगिरिजा: सूर्य्ये शिवेभानन-
श्रीशाम्बा: फलदा भवन्ति यजने व्यस्ता न पूज्या: क्वचित् ॥ २८ ॥

प्रासादे सति पञ्चमन्दिरतया पूज्या इमेऽदः क्रमा-
दन्यत्रैकनिकेतने निजनिजे यन्त्रे च पूज्याः स्थिताः ।
साक्षान्मुख्यतयैकसद्मनि विना यन्त्रेण नैकासने
शस्ताऽनेकसुरार्हणा जगु रिदं प्रागागमज्ञाः किल ॥ २८ ॥
प्रासादः सुरसद्म, सोपि विविधः ख्यातः पुराणादिषु
प्राय स्तद्रचनादिभेद मधुना वक्ष्यामि सामान्यतः ।
यत्रान्तः प्रतिमा प्रमाणरचिता पीठे स्वसिंहासने
तिष्ठन्ती परिपूजिता वितनुते सर्व्वां समृद्धिं नृणां ॥ ३० ॥
आभ्यन्तरं वाह्यमिति द्विधाऽऽहुर्देवालयं यत्र विराजतेऽर्च्चा ।
यत्कुर्व्वतां सौख्य मविच्युतं स्यादस्मिन् परस्मिन्नपि मानवानां ॥ ३१ ॥
आभ्यन्तरं स्वालयमध्यवर्त्ति
स्वपाकसिद्धं हविरेव तस्मिन् ।
वाह्यं पुरग्रामसमीपवर्त्ति
तस्मिन् प्रणीतानलजं हविः स्यात् ॥ ३२ ॥
वाह्यालयोऽपि वहुधा भवतीह यत्नात्
प्रासाद-मण्डप जनाश्रय भद्रभेदात् ।
आद्या भवत्युपलखण्डदृढेष्टकाभि
र्मेर्व्वादिविंशतिभिदारचितोऽतिरम्यः ॥ ३३ ॥
भूमिं निखन्य सलिलान्त मथोपलान्तं
खातं तदेव परिपूर्य्य सितेष्टकाभिः ।
तत्रोपरि प्रतिदिशं सुषमीकृतेऽस्मिन्
प्रासाद-पीठरचनां विदधीत धीरः ॥ ३४ ॥

वास्तुं षोड़शधा विभज्य परितो भागे द्विषड्गि वह्नि-
र्भित्तिं भागचतुष्टयेन रचये द्गर्भं च तन्मध्यत:।
भित्ति गर्भसमोन्नता तदुपरि स्यान्मञ्जरी तावती
मञ्जर्य्या द्विगुणं तदूर्द्धशिखरं प्रग्रीव मस्यांघ्रिभाक् ॥ ३५ ॥
तत्कण्ठामलकावली तदुपरि प्रग्रीवपादोन्नता
घण्टाकर्परपादपीठरचना प्रग्रीवतुल्या मता।
तत्तुर्य्यांशमित स्तदूर्द्धकलश श्चक्रं त्रिशूलं नु वा
तावत्तद्ग्र...दश, एवमुपरि प्रासादमानं त्विदं ॥ ३६ ॥
ग्रहमुनिशरसन्ध्यासंख्यकं दिक्प्रणाङ्गा-
नुभयत उपक्लृप्तैं र्मूलत: कन्दरान्तं।
स भवति रथकैं स्तैं: संयुतो विप्रभूपो-
रुजचरणभवानां निर्म्मितश्चेत् क्रमेण ॥ ३७ ॥
यावन्तो रथका स्ततोद्विगुणिते र्भागै र्विभज्य क्रमा-
द्भित्तिं मध्यतएव तत्र रचयेत्तद्ग्रा सुभाभ्यां बुध:।
पादोनं वह्लेन तत्तदभितो भागैकमानं पुन:
प्राच्यादौ रचयेद्द्वयं द्वयमिति प्रग्रीवकण्ठावधि ॥ ३८ ॥
याम्यप्रतीच्युत्तरभित्तिमध्ये
पार्श्वामराणां निलया विधेया:।
भित्तित्रिभागोन्नत मग्रभित्तौ
द्वारं तृतीयांश-समायतं स्यात् ॥ ३९ ॥
सिंह: स्थाप्यो मञ्जरीमध्यभागे तार्क्ष्या: स्थाप्या: कण्ठमध्येऽष्टदिक्षु।
रत्नै र्धान्यै रिन्द्रमण्यादिकानां पाञ्चालाभि: पूरये-द्रत्नगर्भं ॥ ४० ॥

सामान्योऽयं समुद्दिष्टः प्रासादरचनाविधिः ।
हरिभक्तिविलासेऽस्य विशेषः परिचीयतां ॥ ४१ ॥

संस्थान माहुः खलु मण्डपस्य वृत्तं चतुष्कोण मथाष्टकोणं ।
केचित्त्रिकोणं रसकोण मर्द्धचन्द्रोपमं षोड़शकोणमेव ॥ ४२ ॥

एवं संस्थानसंस्थो भवति बहुविधो मण्डपः पूर्व्वरीत्या
नन्द्यावर्त्तादि-भेदै र्निपुणविरचितः सौख्यमोक्षप्रदायी ।
तादृक् संस्थानतोऽसावुपरि विरचितानेककोष्ठै रुपेतो
धत्तेऽट्टालादिसंज्ञां स भवति वड़भि र्मूलतो न्यूनकोष्ठैः ॥ ४३ ॥

तादृङ्मण्डपसंस्थया यदियुता शालास्तपूर्व्वायता
विज्ञेयः स जनाश्रयो विरचिता द्विताष्टभिः कोष्ठकैः ।
तन्मध्यस्थचतुष्कभित्त्यभिवृते कोष्ठेऽन्तिमे देवता-
स्थाप्यान्यत्र जना यथेष्ट मभित स्तिष्ठन्ति कोष्ठेषु यत् ॥ ४४ ॥

एष मण्डप-जनाश्रयभेदः कीर्त्तितोऽत्र कृतिनां मतमेत्य ।
भद्रनिर्णय मथो मतभेदै रेककण्ठगलितै रिव वक्ष्ये ॥ ४५ ॥

प्रासादवस्तु विनिखन्य शिलेष्टकाभिः
पीठं विधाय परितः पुरुषप्रमाणं ।
भित्तिं तथा तदुपरीष्टतुदोर्मितं वा
कुर्य्याच्छुदीं षिविषमाणि तथोपरिष्टात् ॥ ४६ ॥

च्छुदींषि क्रमात्पादहीनानि च स्यु
स्तथाकण्ठत स्तार्द्धसिंहान्वितानि ।
छदिस्तुङ्गता भित्तिवाहल्यतुल्या
वहिश्छादनान्युच्चतुर्य्यांशभाञ्जि ॥ ४७ ॥

तन्कण्ठामलकावली त्रिवलयं घण्टाकपालं क्रमात्
क्कत्वा पूर्व्ववदेव पीठकलशं चक्रध्वजं चोपरि।
द्वारं पार्श्वगतामरालय मपि द्वास्थान् विदध्या त्ततो
भद्रोऽयं यदि दिग्गतैः सदपरैः स्यात् सर्व्वतोभद्रकं ॥ ४८ ॥
पुष्पकाष्टभेदतो हि सप्तविंशधोदितं
भद्र मेतदिष्टकादि-वस्तुभि-स्तु कल्पितं।
यावदिष्टकादि तस्य वास्तुमृत्सु लीयते
तावदस्य कर्त्तृकीर्त्ति रूर्द्धधाम्नि गीयते * ॥ ४९ ॥
सर्व्वेषां मुखमण्डपं विरचये-दग्रेषु शास्त्रोचितं
सोपानानि घनानि तानि परितः सिंहद्वयं शिल्पिवत् † ।
अग्रे यूपशिरोगृहेषु रुचिरं तद्वाहनं स्थापयेत्
प्राचीरं परिकल्पये-च्च परितो द्वारै श्चतुभि र्युतं ॥ ५० ॥
तदन्तःकोणेषु प्रकृतिसुरसद्मानि शिवदि-
क्क्रमा-च्चत्वारि स्यु र्विधिवदनुरूपाण्यधिकृतः।
यमाग्नरशामध्ये रुचिरचरुशालाऽतिनिविड़ा
विधातव्याऽर्कांशूरगपशुपतङ्गान्यविषया ‡ ॥ ५१ ॥

---

* भद्रमूलप्रोथितेष्टकादिकं यावत् ( यावताकालेन ) भूमध्ये लीनं भवति, तावदस्य कर्त्तुःकीर्त्तिरूर्द्धलोकेषु स्थिरा उद्गीयते। मूलस्थैर्य्यानुरोधि खलु भद्रादि-स्थायित्वं तद्वषा च कीर्त्तिरिति भावः ॥ १ ॥

† शिल्पवत् इति ( ग ) पुस्तके पाठः।

‡ यथा सूर्य्यरश्मिसर्पपशुपतङ्गादिप्रवेशो न भवेत्तथा चरुशाला विधेया इत्यर्थः।

प्रासादादि-सुरालयोदरभुवं भंक्त्वा बुधः पञ्चधा
प्राक् प्रत्यग्गतदक्षिणोत्तरगतैः षट्सूत्रपातैः क्रमात् ।
कोष्ठेष्वेषु च पंचपंक्तिषु पुन स्त्यक्त्वोत्तरां दक्षिणां
पंक्तिं चापरपंक्तिभि र्विरचये-न्मध्येऽथ सिंहासनं ॥ ५२ ॥

उग्राणां चरमाऽऽसनाय विहिता, तुर्य्या च मांसाशिनां
शम्भो श्चात्मभुव स्तथा प्रतिमयो स्तन्मध्यपंक्तित्रयं ।
विष्णोः पंक्तियुगं तु तच्चितयतः प्राचीनपंक्तिं विना
मध्या-चान्यसुपर्व्वणां, स्थिरचललिङ्गासनं मध्यतः ॥ ५३ ॥

सिंहासनं च रथकै रचयेत् पुरोवत्
पश्चाच्च भित्ति मुपरि प्रतिमानुरूपां ।
भित्तिद्वयं तदुभयत्र तदर्द्धमात्रं
मध्ये तदर्द्धमित मुत्तम मब्जपीठं ॥ ५४ ॥

स्थाप्याऽस्मिन् प्रतिमा यथोक्तविहिता सा नैकधा स्या-न्मनो-
मय्येका मनसाकृताऽथ बहुधा-द्रव्यात्मिका चापरा ।
द्रव्यं मृत्तिकतासुवर्णकुसुमान्येकाभदारूपलौ
रीती राजतताम्रहैममणयः श्रेष्ठं क्रमादुत्तरं * ॥ ५५ ॥

एभिः क्रमेण रचिताःप्रतिमा नराणां
भूसौख्यभोगधनराज्यसुताप्तये च ।
कीर्त्यै श्रियै निखिलपुष्टिकृतेऽखिलार्थ-
सिद्ध्यै भवन्ति पुनरत्र, परत्र मुक्त्यै ॥ ५६ ॥

---

* मृत्तिकाबालुकासुवर्णपुष्पाणि एकवर्णदारुपाषाणे रीतिरौप्यताम्रस्वर्णमणयश्च प्रतिमार्थं द्रव्याणि, तेषु उत्तरोत्तरं श्रेष्ठं ज्ञेयम् ।

आद्या स्तिस्र स्तासु तत्कालमर्च्या
लेप्या स्ताः स्यु र्नाचिरं यद्दसन्ति।
अन्याः पुण्याः पूजनीया स्थिरस्थाः
शस्त्रोत्कीर्णाः पाकजा श्चित्रजाश्च ॥ ५७ ॥
स्यान्मार्त्तिकी शुद्धपुराणमृद्भिः
पैष्टी सुवर्णकुसुमान्वितगन्धपिष्टैः।
स्यात् सैकती सकलसूक्ष्मसुवालुकाभि
रेता नरेण निपुणेन करेण कार्य्याः ॥ ५८ ॥
स्यात्पाकजा मदनकल्पितमूर्त्तिलिप्त-
मृण्मूषिकान्तकुहरे सहसाऽभितप्ते।
निक्षिप्ततप्तशुचिपित्तलरूप्यताम्र-
हेमादिधातुभि रतीवतरां द्रुतैश्च ॥ ५९ ॥
शाणोत्कीर्णा रत्नजाः स्यु र्विशेषात्
शस्त्रोत्कीर्णा दारुजा चाथ शैलो।
तासां मध्ये दारवी चित्रिता स्यात्
पट्टे कुड्ये चापरा चित्रिताऽपि ॥ ६० ॥
कालेऽनुकूले यजमानतक्ष्णोः शुभेषु लग्नर्क्षदिनग्रहेषु।
अर्च्चा विधेया निपुणेन तक्ष्णा तीक्ष्णायुधै र्ध्यानपथानुरूपा ॥ ६१ ॥
पुण्यारण्यजलस्थलाश्रमगिरिद्रोणादिगूढां शिलां
स्निग्धां संस्फुटितां दृढां हुतवहालीढां समानत्विषं।
उत्खन्य क्षितिगर्भतोऽथ विविधद्रव्यै श्च तीर्थादिकैः
प्रक्षाल्याक्षतलाजसक्तुदधिभि स्तद्दिक्षु दद्याद्बलिं ॥ ६२ ॥

ये चास्मिन् क्रूरसत्त्वाः प्रथमपरिवृढ़ा भूतवेतालसंघा
नित्यं तिष्ठन्ति तेऽस्मत्कृतबलिविधिना प्रीतिमन्तो भवन्तु ।
देवार्च्चार्थं शिलैषा सकलगुणवती गृह्यते शिल्पिविद्भिः
स्थानादस्मादपेत्य प्रतिदिन मतुलं मङ्गलं नो दिशन्तु ॥ ६३ ॥
एवं तानुत्सार्य्य तत्रैव हव्यै र्होमं कृत्वा नारसिंहेन * वह्नौ ।
साहस्रं वा चाष्टयुक्तं शतं वा संपाताज्यं लेपयित्वा नयेत्तां ॥ ६४ ॥
हविष्यान्नं भुक्ता निशि सह शयानः स्थपतिना
पुनः प्रातः स्नातो निशितनिखनैः स्तोदयतु तां ।
अभिप्रेतान्मानात्मनमि विदधत् किञ्चिदधिकां †
युगास्त्रीकृत्वाऽमुं नयतु निरवनार्थं स्वभवनं ॥ ६५ ॥
मानाङ्गुलेन रचिता प्रतिमा प्रशस्ता
तिथ्यङ्गुलावधि गुणाङ्गुलतो गृहेऽर्च्चा ‡ ।
ग्रामेऽर्च्चिता तदनु सार्द्धकरावधि स्यात्
प्रासादगा श्रुतिकरावधि सार्द्धहस्तात् § ॥ ६६ ॥
एतन्निरुक्तं प्रतिमाप्रमाणं तत्तुर्य्यभागेन च पद्मपीठं ।
यद्वर्त्तुलं तच्चतुरस्रकं वा सकर्णिकाकेशर-कण्ठपत्रं ॥ ६७ ॥

---

* नृसिंहमंत्रेण ।

† यावत्परिमाणवतीं प्रतिमांरचयेत् ततः किञ्चिदधिकपरिमाणां चतुरस्रीकृत्यानयेत् ।

‡ गृहविषये प्रतिमा त्र्यङ्गुलातः पञ्चदशांगुला भवेदितिभाव्यं ॥ १ ॥

§ ग्रामविषये पुनः पञ्चदशांगुल मारभ्यसार्द्धहस्तपर्य्यन्तं (षट्त्रिंशांगुलान्तं) भवेत् परिमाणं प्रतिमायाः । प्रासादगता प्रतिमातु सार्द्धहस्तात् चतुर्हस्तपर्य्यन्तं परिमाणं भजेदित्यर्थः ।

श्रौन्नत्यं प्रथमं विभज्य नवधा तद्द्वादशांशोऽङ्गुल-
स्तैःस्या-द्वादशभि र्मुखं त्रिभि रथो कण्ठो गल श्चैकतः।
वक्षो द्वादशभि स्तथा तदुदरं द्वाभ्यां कटि र्नाभियुक्
सूर्य्यांशै र्जघनं च जान्ववधि रूरू स्या-द्वितस्तिद्वयं ॥ ६८ ॥
तावद्गुल्फयुगास्त मंघ्रियुगलं पार्ष्णी षडंशोन्नतौ
पादौ तालमितायतौ भुजयुगं जानुद्वयान्तावधि।
वक्षस्तिर्य्यगथायतं करमितं शेषाः प्रतीका यथा-
शोभं स्युः पुरुषानुकारिरुचिराः सल्लक्षणै र्लक्षिताः ॥ ६९ ॥
पुंसामयं हि घटनाविधि रङ्गनानां
स्यात् सप्तभागरचना पृथुकौ स्तनौ स्तः।
उग्रास्तु षोड़शविभागकृताः स्यु रन्ये
त्रिंशद्विभागरचिताः स्यु रथाऽसुराद्याः ॥ ७० ॥
मानेनानेन तक्षाऽनुदिन मनलसः शुद्धभक्ष्याशनः स-
न्नर्च्चां तां निर्म्मिमीत प्रतिदिन मुपलं पूजये त्तं द्विजेन।
श्रों तत् सन्नत्युपेतेन च निजमनुना निर्म्मितायां च तस्या
मर्च्चेऽक्षि स्वानुकूले समुदितविधिना तत्प्रतिष्ठां विदध्यात् ॥ ७१ ॥
शिलाभावे दारु स्थपतिपतिना तेन विधिना
दृढं स्निग्धं ग्राह्यं तदनु मणिहेमादिक मपि।
तथा कृत्वा मर्च्चां बहुविधकषाये स्व खदिरा-
र्ज्जुनादीनां वेष्टैः सह विदलयन् पर्य्युषितयेत् ॥ ७२ ॥
निबध्य तां खादिरशङ्कुकीकसै स्तैर्मृद्विलेपैः प्रतिमां च मार्त्तिकीं।
विधाय संशोध्य समस्तवर्णकै र्विचित्रयेच्चित्रविदा चिरं यजेत् ॥ ७३ ॥

अर्च्चां पञ्चकषायगव्यमधुराम्भःसप्तमृद्भाविते:
कुम्भैः प्रागधिवासितां श्रुतिगिरा संस्नाप्य संस्थाप्य च ।
न्यस्त्वा न्यासगणानसूनपि यथाशास्त्रं च संस्थापयेत्
होमादिं च विधाय सात्त्वततया सिंहासने स्थापयेत् ॥ ७४ ॥

रत्नन्यासविधिं विधाय विविधै र्भोज्यै रिमां पूजये-
द्दीनानाथजनान् प्रतोष्य तदनु स्नेहाद् द्विजान् भोजयेत् ।
नित्यं तां प्रतिमां प्रियेण मनसा सेवेत सर्व्वात्मना
वित्तं चित्त मथानुकाल मखिलं तस्यै समर्प्य स्वयं ॥ ७५ ॥

अर्च्चाभावे गण्डकीतीरजाते शालग्रामे नित्यपूजा विधेया ।
तेषु श्रेष्ठ श्चक्रचिह्नोऽतिनील श्चक्राधिक्ये तत्फलाधिक्य मूह्यं ॥ ७६ ॥

चक्रैकेन सुदर्शन स्तदुभयेनार्च्चस्तु दामोदर:
स स्या च्चक्रचतुष्टयेन सहितो लक्ष्म्यादि दामोदरः ।
सोऽपि स्थूलतरो जनार्द्दन इति ख्यातस्त्वनेकारिणं
नानावर्ण मनन्त माहु रपरानेवं विविच्यार्च्चयेत् ॥ ७७ ॥

नीलस्थूलो वर्त्तुलो वक्त्रमध्ये
युक्तो व्यक्तै श्चक्रचिह्नै श्चतुर्भिः ।
हैमीं मालां गोष्पदाङ्कं च बिभ्र-
त्साक्षाल्लक्ष्मीयुक्त नारायणः स्यात् ॥ ७८ ॥

अयं यत्र तिष्ठत्यभद्रंकुतःस्या-
च्चतुर्वर्गसिद्धि र्यतोऽयत्नसिद्धा ।
तदीया शिला वापि मोक्षं विधत्ते
पुन स्तादृशी सेविता किं न दत्ते ॥ ७९ ॥

तस्यालाभे स्वेष्टदेवस्य यन्त्रे व्यक्तोत्कीर्णे स्वर्णपट्टादिक्लृप्ते।
पूर्व्वोक्ते वा मण्डले नित्यचित्रे यत्र क्वापि स्थूलगोले मणौ वा॥ ८०॥
नीले विष्णु र्हीरके कृत्तिवासा देवी पूज्या पद्मरागे यथावत्।
सूर्य्य:स्थूले सूर्य्यकान्ते प्रवाले हेरम्ब श्चेत्याहु रेके न भूमौ *॥ ८१॥
इति पञ्चविधाधिकारिभेदादिह पाञ्चायतनौ समर्चनोक्ता।
तदवस्थितये प्रसङ्गतोऽस्मिन् गृहभेदादि-निरूपणं निरुक्तं॥ ८२॥
दीक्षादेवैष्णवत्वे भवति तदपरोपास्ति रेवं प्रकारा
तस्मात्तत्राधिकारी भवति तदुचितो वैष्णव: शाम्भवश्च।
तौ चेदेकान्तभक्तौ दिनमनुभजत: स्वं स्व मिष्टं सुरेशं
ज्ञानात् साधारणौ चेद् यजतइह यथा, कथ्यतेऽसौ प्रकार:॥ ८३॥
सूर्य्यं गणेशं शिव मच्युतं च पश्चादुमां भागवतो यजेत।
शैवस्तु सूर्य्यैकरदाच्युतान्ते शिवं शिवां पूजयताद् यथावत्॥ ८४॥
इत्थं सर्व्वत्राच्चनास्वादितोऽर्च्च्य: सूर्य्य: पश्चादङ्गिनोऽन्ये स्यु रच्चर्या:।
तद्विम्बान्तर्भाति नारायणोऽन्यो य: सर्व्वार्चाग्राहकोऽनुग्रहीता॥८५॥
अर्च्चा साध्या वक्ष्यमाणोपचारै र्नैवेद्यं स्या-त्तेषु मध्ये वरिष्ठं।
देवा ह्यन्ते प्राप्नुवन्ति प्रतिष्ठां वक्ष्ये तस्मा-दन्नसिद्धि-प्रकारं॥ ८६॥
तत्तद्देवमनुप्रणीत-दहने तद्देवदेवे हुते
संपन्नेऽथ जुहोतु मूलमनुना हव्येन चाष्टाहुती:।
तत्सिद्धै रनलै र्ज्वलद्भि र्बहुधा तत्रत्यचुल्लीगतै:
पक्वाऽन्नौदन मोदनादिक मथो संसाधयेद्वल्लभ:॥ ८७॥

---

* शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासुच। नित्यपूजा हरे: कार्य्या नतु केवल भूतले। इति स्मरणात्।

अन्नोदनं वाल्यसमर्च्चनोचितं तथा त्रिभो र्यानगतोत्सवेष्वपि ।
परेषु पूजावसरेष्वनेकधा निवेदनीयं विधिसिद्ध मोदनं ॥ ८८ ॥

मन्नारिकेलकदलीयवदुग्धलाज-
गोधूमखण्डचणकादिविकार-भेदैः ।
स्यात् केवलेन हविषा च गुडेन ताभ्यां
पाकादनेकध मन्नोदन मन्नभिन्नं ॥ ८९ ॥

स्यादोदनं लवण-नीर-हुताशपाकात्
मन्नोहितण्डुल सकन्दफलच्छदाद्यैः ।
सूपान्नपायस-सतैलनपिष्टकाद्यं
विप्रेतरै रनुपहार्य्य मवश्य मेतत् ॥ ९० ॥

उभयोरिह पाककर्म्मणोर्द्विविधाः पाककृतो भवन्तिहि ।
रसपाककृतः पृथक् भवेयु निपुणा येषु रसेषु ये च तत्र ॥ ९१ ॥

इह षट्सु रसेषु पञ्च मुख्या मधुरोऽम्लो लवणं कटुः कषायः ।
सुखयन्ति सुरानिमे न तिक्तः सतु वर्ज्यो घनसार मन्तरेण ॥ ९२ ॥

मधुरस्तु विभज्यते गुड़ादा-
वथ चिञ्चादिषु चाम्लकः कटुश्च ।
मरिचादिषु, सैन्धवादिके वै
लवणः, शाकदलादिके कषायः ॥ ९३ ॥

एषूत्कटाः केचिदनुत्कटाः समाः
सम्मिश्रिताः केऽपि रसा भवन्ति हि ।
ततो यथास्वादु विविच्य पाचये-
द्यदात्मने रोचत ईश्वराय तत् ॥ ९४ ॥

तत्रापि मेध्या विनिवेदनीया न चेतरे ते मधुरादयश्च ।
न पातनीयं लवणं पयस्वे देवाय साक्षादपि तन्न देयं ॥ ९५ ॥
पात्राणि पाकार्थं गुरूणि कुर्य्याद्दृढ़ानि रौप्यादिविनिर्म्मितानि ।
प्राय: प्रशस्तान्यथ मार्त्तिकानि भाण्डानि भूरीणि च पाण्डराणि ॥९६॥
नैवेद्यं विभवानुरूप मधिकं देयं सहस्रावधि
प्राक्प्रोक्तं परिमाण मत्र किमपि ब्रह्मर्षि-देवर्षिभि: ।
तस्माद्यावदुपार्जितावधि यथाकालोचितं कल्पते
प्रस्थादूनमिदं न शस्त मितरे प्राहु: प्रवीणा: पुन: ॥ ९७ ॥
प्रस्थ: शरावइति मानविदा निरुक्त:
स स्याच्चतु:कुड़वक:, स पलै श्चतुर्भि: ।
कर्षै श्चतुर्भि रिद, मेष मत स्त्रिमाण:
स्यान्माषपञ्चक ममी, स मतोऽष्टगुञ्ज: ॥ ९८ ॥
गुञ्जा च षड्यवमिता स च पूरणीयो-
ऽष्टाभि श्च सर्षपफलैरपि तण्डुलाभ्यां ।
तैस्तण्डुलै रथ नवायुतषट्कसहस्र-
चोणीशतोत्तरसप्तषष्टिमितै: शराव: * ॥ ९९ ॥
तेन कार्य्यइह मापनाविधि र्यावदिष्टपचनीयवस्तुनां ।
तोलनादिक मथोपलादिना कार्य्य मार्य्यरचितै श्च वल्लभै: ॥ १०० ॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सुरिसर्व्वस्वे पूजनाङ्गव्यवस्थानिरूपणं नामोनविंशतिसंग्रह: ॥ ० ॥

---

* तण्डुलै: ६२१६० परिमितै: १६८६४० परिमितै: सर्षपैर्वा शरावोऽभिमत: ।

विंश: संग्रह: ।

ते शौचशीला: कृतनित्यकृत्या: पूर्व्वेऽह्नि मेध्योदनभोजिनश्च ।

धौतांघ्रिहस्ता उपविश्य शालां पचेयु रन्नानि पटावृतास्या: ॥ २ ॥

कश्चिच्च तत्र तिलश: कृतनारिकेल-

सारै: शिताभि रलसानलपाकसिद्धै: * ।

कुर्व्वीत मोदककुलं पृथु कोरकाख्यं

स्वादूत्तरं सुरभितं घनसारसारै: ॥ २ ॥

गोधूमचूर्णकदलोघृतमिश्रपिण्ड

मामिक्षया सह विमर्द्य वटी र्विधाय ।

पक्का घृतेन शितयाऽथ विपच्य तानि

बध्नीत खण्डमरिचेन्दु-सुवासितानि ॥ ३ ॥

तच्चूर्णान्यपि गोपयोगुड़जलै: संप्राप्य पाकं गतै

तान्युत्तार्य्य विमर्द्य तै: शशिनिभा: पूरोदरा: पूपिका: ।

निष्पूरा अथवा विविच्य पुन राज्याभ्यन्तरे पाचये-

दामिक्षागुड़नारिकेलमरिचक्षौद्रैस्तु पूरं मतं ॥ ४ ॥

लाजैर्गोघृतभर्ज्जितै: समशितापाकेन संसाधितै:

सुक्षोदीकृतनारिकेलकलितै: कृष्णैर्यवानीयुतै: ।

बध्नीयात् पृथुमोदकानि सुरभीण्येभि: पृथक् संस्कृतै:

कुर्य्यान्मृद्भाजनेषु गुड़धान्याख्या स्तथा वासिता: ॥ ५ ॥

---

* मन्दाग्निपाकेनसिद्धै: ।

एवं यवस्य चणकस्य रजोभि राज्य-
संमर्द्दिते स्न वटकानि तनूनि कृत्वा ।
पक्त्वा घृतैः पुन रनूनशितासु पाकं
कृत्वा निबध्य रचयेत् करकाकृतीनि ॥ ६ ॥
दुग्धं घनीकृत्य दराग्निपाकैः
शितान्वितं तत्शिशिरो विधाय ।
पात्रे विदध्याद्रसपेटिकाख्याः
पूरान्विता स्ता रसपूरिकाख्याः ॥ ७ ॥
सुपक्वदुग्धोत्थितसारभागानेकत्र पात्रे विनिधाय तेन ।
घनीकृतेनाऽथ हिमीकृतेन कुर्य्यात्सुगन्धी रसपर्पटीश्च ॥ ८ ॥
उष्णे चीरे तत्चणादम्लयोगा-
दामिक्षा स्या त्तां च पिष्ट्वा कदल्या ।
सर्पि:पाकानन्तरं खण्डपिण्डे
र्युञ्ज्यात् सा स्याच्चन्द्रकान्तो रसाला ॥ ९ ॥
कोष्णं पयोऽम्लसहपर्य्युषितं दधि स्यात्
पादाम्बुतक्र मिद मर्द्धजलं ह्युदश्वित् ।
स्यान्निर्ज्जलं मथित मित्य मनेकभेदं
मत्स्यण्डिकेन्दुमरिचै रधिवासये त्तत् ॥ १० ॥
दध्युत्थं नवनीत मेतदपि चेत् पूर्व्वाहदोहोद्भवं
स्याद्धैयंगव मेतदेतदुभयं मत्स्यण्डिकेन्दुद्रवैः ।
पिण्डीकृत्य पृथक् पृथक् सुचषकेष्वाकल्पये द्विष्णवे
गोपालाय विशेषतो विषदधीः प्रात स्तदीयार्च्चने ॥ ११ ॥

गुड़ो भवेत् पाकवशेन शर्करा
ततः शिता चाति शिताशितोपला ।
मत्स्यण्डिका चान्तिमपाकतः पुनः
समस्तपाकादनु खण्डता मियात् ॥ १२ ॥
इदंसमस्तं पुन रन्यपाकतो
विधाय कर्पूररजःसुवासितं ।
प्रकल्पयेत् फेणितलड्डुमण्डकान्
सपूरनिष्पन्नतया पृथक् पृथक् ॥ १३ ॥
सुपक्वदुग्धं शितया विलोड़ितं पचेलिमैः मत्कदलीफलै र्युतं ।
सदुग्धसारं मरिचेन्दुवासितं प्रकल्पयेच्चामृतकुण्ड मीदृशं ॥ १४ ॥
समदुग्धदधिश्रिता शिताऽ मृतरम्भाफलसार मिश्रिता ।
मरिचेन्दुसुवासिता मता सुरमाला परिकल्पयेच्च तां ॥ १५ ॥
चतुर्गुणे शुद्धजले विनिक्षिपेत्
शितां समारैः कदलीफलद्रवैः ।
विलोड्य सौगन्धवहप्रपानकं
करोतु सामिक्ष मिदं पृथग्विधं ॥ १६ ॥
लवङ्गजातीफलवासितं पयः
शनैः शनैः पावकपाचितं पयः ।
जलं पयःपेट्यदरस्य मुज्ज्वलं
प्रपानकं पेयतया प्रकल्पयेत् ॥ १७ ॥
फलानि कालोपचितानि भूयः स्वादूनि शुद्धानि पचेलिमानि ।
सकोषमालापनसाम्रमुख्यान्यामानि शृङ्गाटकदाड़िमानि ॥ १८ ॥

एतान्यन्यान्यात्मरोच्यानि यानि स्वादूनि स्युः शुद्धवस्तूनि तानि ।
प्रीत्या दातुं विष्णवे कल्पयित्वा तद्दानान्तं पल्लवाद्यैः पिदध्यात् ॥१८॥
अन्नव्यञ्जन-पूपपायसयवागूसूपशाकादिकं
यच्चोक्तं बहुधौदनं तदपि च स्यात् पाकतोऽनेकधा ।
शुद्धंमिश्रमिति द्विधा ऽन्न मथ तत् शुद्धं भवेत् पञ्चधा
पीतान्नं दधिकर्द्दमामृतघृतप्रक्षालितान्नानि च ॥ २० ॥
क्षिपेत् प्रतप्ताम्बुनि शालितण्डुलान्
हिमाम्बुधौतानुजनिद्रवान्वितान् ।
निगाल्य मण्डं रचये द्धृतप्लुता-
निदं हि पीतान्नमिति प्रकल्पयेत् ॥ २१ ॥
इदं हरिद्रारसवर्ज्जितं कृतं समेन दध्ना शितया च तुल्यया ।
परिप्लुतं गोघृतसेकवासितं पचेत् सुरुच्यं दधिकर्द्दमोदनं ॥ २२ ॥
सुसिद्ध मन्नं समशर्कराघृते विलोड़ितं स्यादमृतान्न मुत्तमं ।
अशर्करं तच्च सदा प्रियङ्करं घृतान्न मीषल्लवणं द्रवान्वितं ॥ २३ ॥
अन्नं क्षालित मम्बुनाऽतिशुचिना निर्गालितं तत् पुन
र्दध्ना वा मथितेन मिश्रित मथो तक्रेण दोदग्धिता ।
पाकोद्यत्फलपूरसारपयसा संलोड़ितं वोरुधा
संसिद्धं लवणार्द्रजीरकयुतं प्रक्षालितान्नं भवेत् ॥ २५ ॥
मिश्रान्नं कृशरं च खेचरमिति द्वेधाऽल्पतप्ताम्बुनि
क्षिप्ता क्षालिततुल्यमुद्गशकलान् तत्तण्डुलां स्तान् पचेत् ।
निर्नीरे सति तेषु तत्समघृतं लोणं च किञ्चित् क्षिपेत्
पाके स्यात् कृशरान्न मार्द्रकमरीचै र्हिङ्गुजीरैः प्लुतं ॥ २५ ॥

तण्डुलार्द्धमितमुद्गमिश्रितं पाचितं सुपयसाऽथ गालितं ।
अर्द्धगोघृत परिप्लुतं भवेत् खेचरान्न मधिवासितं तथा ॥ २६ ॥

क्षीरं तद्दशमांशतण्डुलयुतं पक्त्वा घृताक्ते दृढे
पात्रे क्लेददशावधि प्रतिलवं दर्व्या विलोड्याऽसकृत् ।
पादं गव्यघृतंशिता च विषदां क्षिप्त्वा मरीचेन्दुजैः
क्षोदैश्चाप्यधिवासखण्डपिहितं तत्कल्पयेत् पायसं ॥ २७ ॥

पयस्तण्डुलक्षोदनीराज्यतुल्यं
पचेन्मन्दवह्न्यार्चिषा मन्दमन्दं ।
समालोड्य दर्व्या शिताक्षोदपाते
यवागूं तथा साधयेत् सौरभाढ्यां ॥ २८ ॥

यवशालितण्डुलरजः कुड़वं परिपाकसिद्धपयसीनगुणे ।
परिकीर्य्य खण्डहविषा प्रपचे-दधिवास्य यावक मिदं कल्पयेत् ॥ २९ ॥

शुद्धैः कन्दै र्वीजमूलैः फलैश्च त्वग्भिः शून्यैः केवलै र्मिश्रितैर्वा ।
पक्त्वा नीरैर्हिङ्गुजीराज्यलोणैः सौगन्धाढ्यं साधयेद्व्यञ्जनानि ॥ ३० ॥

माधुर्य्याणि कटूनि कानिचिदथो अम्लानि पाकैः पृथक्
व्यामिश्राणि रसान्तरेण मथनक्लिन्नानि भृष्टानि च ।
नानाकारनिकृत्तवस्तुशकलैः संसाधितानि क्रमात्
पात्रेषु प्रतिपूर्य्य गोघृतवृतं प्रत्येकतः स्थापयेत् ॥ ३१ ॥

मुद्गमाषचणकै र्हरिमन्थैः षड्गुणाम्बुनि खरानलसिद्धैः * ।
रामठाज्यलवणार्द्रकजीरैः सूप मन्न मधिवास्य विदध्यात् ॥ ३२ ॥

---

* तीव्राग्निपाचितैः ।

चूर्णै: शालियवोद्भवै: समसितादुग्धाम्बुभि: पाचितै:
पूपान् सर्पिषि पूर्व्ववद्दृढविधान् कुर्वीत दर्वीं दधत् ।
पिष्टैर्निस्तुषधौतमाषजनितै: सच्चूर्णरम्भापय-
स्साराढ्यैरपि कल्पयेद्दृढविधान् पूपान् प्रतप्ते घृते ॥ ३३ ॥
नालीका: पुलिका स्तथैव वटुका: स्युश्छिद्रका: शष्कुला
भूय: पर्य्यटकाश्च पूरवटका: सच्चन्द्रकाख्यादय: ।
येऽन्ये माषयवादितण्डुलकृता: पूपा: समस्तांश्च तान्
कर्पूरद्रवखण्डचूर्णमरिचक्षोदै: सदाऽऽमोदयेत् ॥ ३४ ॥
वास्तूकं शितकोषलाऽथ चणकं चान्यानि शाकानि चेत्
क्षोदीकृत्य घृतेन वाऽथ पयसा संपाच्य लोणद्रवै: ।
पाके सत्यथ जीरकाज्यचलुकं दर्व्याऽभिघार्य्य क्षिपेत्
किम्वा लुणशलाटुकन्दकदलीमिश्राणि संसाधयेत् ॥ ३५ ॥
भक्ष्यं भोज्यं चर्व्व्य चोष्यं लेह्यं पेयं चेत्थं सर्व्वं ।
तन्नैवेद्यं षोढ़ा वेद्यं यावद्योग्यं धीरै र्योज्यं ॥ ३६ ॥
मिश्रान्नै: सङ्गवार्च्चा भवति तदनु मध्याह्नपूजा सपूपै:
शुद्धोष्णान्नैश्च सायंतनयजन मथो क्षालितान्नै: सभृष्टै: ।
नक्तं पूजा कदुष्णै र्भवति भगवत: पायसान्नै र्विशेषा-
दन्यत् सर्व्वत्र सर्व्वं समुदित मुरुधाऽनोदनं वौदनं वा ॥ ३७ ॥
अन्नाद्योदन मग्निपक्व मखिलं स्याद् यावदुष्णं शुचि,
क्षीरं लाजविकार माज्यविहितं स्याद् यामयुग्मावधि ।
यावत्यामचतुष्टयं गुड़कृतं क्लेदावसानं फलं
सद्य: पेयजलद्रवं दधि विना हिङ्ग्वादि यावत्रणं ॥ ३८ ॥

इतोऽन्यथा सर्व्वे मशुद्ध मर्च्चने
तथेतरत् पर्य्युषितं च वस्तु यत् ।
नखाङ्गरुट्श्वासमलमीक्षणाशय
स्वनादिदुष्टं न नियोज्य मण्वपि ॥ ३८ ॥
एवं कुर्व्वंस्तु तेषु प्रतियजननिवेद्यौदनं वल्लभेषु
प्रातर्य्यागाय मन्त्री करपदवदनं क्षालयेत् शुद्धनीरैः ।
आचामेद्विष्णुमन्त्रैः पृथगथ विधिना केशवाद्यै श्चतुर्वि-
शत्या मन्त्रीकृतेऽस्मिन् स्वय मखिल मघं प्रोज्झ्य नारायणः स्यात् ॥४०
पिबेच्चिशो वार्य्यथ केशवेन
नारायणेनापिच माधवेन ।
गोविन्दमन्त्रेण च विष्णुना च
प्रक्षालयेत् पाणियुगं तथाऽऽभ्यां ॥ ४१ ॥
सम्मार्जयेत् श्रीमधुसूदनेन
त्रिविक्रमेणोष्ठपुटं मनुभ्यां ।
मुखं तथा श्रीधरवामनाभ्यां
धावेत् हृषीकेश मुदीर्य्य पाणौ ॥ ४२ ॥
श्रीपद्मनाभेन विशोध्य पादौ दामोदरेणाथ शिरोऽभिषिञ्चेत् ।
स्पृशे दपांस्पर्शपुरस्सरेण संकर्षणेनैव करेण वक्त्रं ॥ ४३ ॥
नासापुटे द्वे अथ वासुदेवप्रद्युम्नयो र्मन्त्र मुदीर्य्य मन्त्री ।
उक्त्वाऽनिरुद्धं पुरुषोत्तमं च स्पृशेत्तथा नेत्रयुगं क्रमेण ॥ ४४ ॥
अधोक्षजेनाथ नृसिंहनाम्ना स्पृशेत् पृथक्कर्णयुगं तथैव ।
नाभिं स्पृशेदच्युतमन्त्र मुक्त्वा जनार्द्दनेनोदरमेव भूयः ॥ ४५ ॥

स्पृष्टे-दुपेन्द्रेण शिरःसमन्ता-त्स विष्णुना स हरिणा भुजौ द्वौ।
ततो द्विराचम्य समर्च्चनाय योग्यो भवे-द्वैष्णवपुङ्गवोऽसौ ॥ ४६ ॥
वैष्णवाचमन मेतदीरितं विष्णुमन्त्रमय मागमोदितं।
नामुना भगवदर्च्चना विना, द्राक् फलाय विहिताऽपि कल्पते ॥ ४७ ॥
एवं स्थितेऽर्च्चासमयव्यवस्थाऽवस्थाप्यते तत्र वहु विकल्पः।
उक्तं पुराकल्पविशेषविज्ञै र्वच्येऽथ मुख्यं खलु तेषु पच्चं ॥ ४८ ॥
नित्यार्च्चनाकाल मुशन्ति पञ्चधा वुधाः प्रभातं किल सङ्गवं ततः।
मध्यन्दिनं साय मथ प्रदोषं त्वमीषु देवा यजनाय जाग्रति ॥ ४९ ॥
कुर्य्युः केऽप्येककालं सुरगणयजनं केऽपि धीरा द्विकालं
केचिच्चाढ्या स्त्रिकालं तदधिकविभवा ये चतुष्काल मेते।
केऽप्यार्य्याः पञ्चकालं निजनिजविभवे शक्तिशाठ्यं त्यजन्त
स्तन्नोल्लंघन्ति जातु द्विषि विपदि शिरश्छेदने वाऽप्यपासे ॥ ५० ॥
विष्णोर्भक्ताः पञ्चकालप्रपन्ना
इत्यार्षोक्ति र्वैष्णवाः पञ्चकालं।
कुर्व्वन्त्यन्ये शैवशाक्तैकदन्ता-
दित्याः कुर्य्यु र्व्युत्क्रमेणाहु रेके * ॥ ५१ ॥
प्रात र्देवं कुमारं तदुपरिसमये पूर्णपौगण्डभावं
मध्याह्नादौ किशोरं त्रिविध मुपचरे-दादिमध्यान्तभावैः।
मन्त्रै स्तै र्वच्यमाणैः पृथगथ विधिभि स्तत्तदर्हौपचारै
र्नैवेद्यै स्तै र्विशेषै र्भगवदपचितिः पञ्चधाऽस्ति प्रसिद्धा ॥ ५२ ॥

* शैवाश्चतुष्कालं शाक्तास्त्रिकालं गाणेशा द्विकालं सौरा एककाल मितिव्युत्क्रमेण पूजां कुर्व्वन्ति इति केचन मन्यन्ते।

केचित् पूर्व्वाह्नवर्ज्जं तदितरसमयेऽप्यर्च्चयन्ति माधवोऽसौ
प्रात र्बाल: कुमार: प्रहरयुगगते सायमाद्य: किशोर: ।
रात्रौ तारुण्यपूर्ण: स खलु विधि रयं जाहतीतेऽपि कालेऽ
तीते ऽन्यत्रापि कार्य्यो न च विधिनिपुणै र्लंघनीय: कदाचित् ॥ ५३ ॥

एवं ज्ञात्वा पूजनप्राप्तकालं
पूजाद्रव्याण्याददानोऽखिलानि ।
मार्गेणाथ प्राक् प्रदिष्टेन मन्त्री
पूर्व्वं सूर्य्यं पूजये त्तच्च वच्ये ॥ ५४ ॥

याव न्नार्क: पूज्यतेऽर्घप्रदानै
स्तावन्नान्य: कोऽपि देवं पुरस्तात् ।
विष्णु: शम्भुश्चाम्बिका वाऽऽम्बिकेयो
ऽभ्यर्च्च्य स्तस्मादादिपूज्यो दिनेश: ॥ ५५ ॥

साक्षात्सूर्य्यो लोकसाक्षी पुरस्ता
दाविर्भूतो लोकयात्रां तनोति ।
अन्नं सृष्ट्वा वृष्टिभि स्तेन यज्ञान्
यज्ञै रिष्टान् कल्पयत्येष लोकान् ॥ ५६ ॥

सर्व्वोपचारै रय मर्च्चितोऽपि न द्वादशात्मा परितोष मेति ।
कृतेऽर्घदाने परितुष्यतेऽसौ ततो मतोऽर्घप्रिय एष लोके ॥ ५७ ॥

तत्पूजार्थं सुधर्व्वैन्द्रककुभो मध्ये शुभं मण्डपं
कुर्य्या न्मध्यवितर्द्दिमध्यविलसत्पद्माभपीठोत्तमं ।
तन्मध्ये प्रतिमां विधाय तरणे स्तत्कान्तताम्रादिजां
ध्यानोक्ताकृति मस्य यन्त्र मथवा तत्रैव वाऽमुं यजेत् ॥ ५८ ॥

यन्त्रमाह ।

मार्त्तण्डवीजपरिवृंहित-कर्णिकान्त

स्वर्णत्रिकोण वह्निरम्बरकेशराढंर ।

अष्टाचरोल्लसित-पल्लव-मिन्दुवीतं

वृत्तत्रयोल्लसित मेत-दमुष्य यन्त्रं ॥ ५८ ॥

मव्यामव्यदिशो स्व मण्डपयुगं पद्माष्टपत्रान्वितं

कृत्वाऽर्घं वितरे-त्तयो रयनयो: षट्षट्सु मासेष्वथ ।

दौर्व्वल्या-त्तदसम्भवे हुतवहे तोयेऽन्तरिच्चेऽथवा

पिण्ड्यां शुद्धमहीतले कि मथवा तत्पूजितार्च्चोपरि ॥ ६० ॥

केचित् प्राहु रिदं रवे: समुदये याम्यस्थिते मण्डले

दद्या-दर्घं महस्कराय सततं सायं च सव्ये स्थिते ।

तत्रैकं मत माकलय्य कलयेत् प्रात स्तदीयार्च्चनं

वच्ये तत्क्रम मत्र येन विधिना बालोऽपि सम्यक् चरेत् ॥ ६१ ॥

पूर्व्वाशाभिमुखो वस-न्ननलस: शुद्धाशय: स्वासने

घण्टावादनपूर्व्वकं च विधिवद् यावद्वहिर्मातृकां ।

भूयस्तां ध्रुवसंपुटां सनमसं विन्यस्य वामाग्रत:

सामान्यार्घविधिं विधाय सकलं तेनाऽम्बुना प्रोच्चयेत् ॥ ६२ ॥

प्रचाल्य शङ्खं निजहेतिमन्त्रेणान्त: चिपे-दच्चतगन्धपुष्पं ।

हृदाऽम्बुनाऽऽपूर्य्य जपेद्ध्रुवेण सामान्य मर्घं विदधीत चेत्थं ॥ ६३ ॥

मूलाम्बुजादूर्द्ध्वमनाहतान्त माधारशक्तिं प्रकृतिं च कूर्मं ।

शेषं वराहं भुवमन्तरीक्षं त्रिनाभिचक्रान्त मथो तदन्त: ॥ ६४ ॥

न्यसे दर्कलोकं तदन्त विमानं तदन्तश्च तेजोमयीं वेदिकां च ।
ततो योगपीठं चतुःपादपातं सधर्माद्यधर्मादिकं तत्र भूयः॥ ६५ ॥
प्रभूतं पूर्व्वस्यां विमल मपरस्यां यमदिशि
प्रतीच्यां सायं तूत्तरदिशि समाराध्य मपि च ।
न्यसे-न्मध्ये दिव्यं परमसुखपीठं तदुपरि-
प्रचण्डांशो विम्बं रसयुगकलाभिः * परिवृतं ॥ ६६ ॥
तदूयन्त्वपद्मं मनसा तदन्त न्यसे-द्दलेष्वस्य नवैव शक्तीः ।
अर्कीवक्रस्वरवित्तयैः स्वरैः स्तै विन्दग्नियुक्तैः सहिताः पुरस्तात् ॥ ६७ ॥
दीप्ता च सूक्ष्मा च जया च भद्रा विभूतिनाम्नी विमला त्वमोघा ।
स्याद्विद्युताष्टस्वय सर्व्वतोऽन्ते मुखीति शक्ति नवमी खरांशोः † ॥६८॥
ब्रह्म-विष्णु-शिवपूर्व्व मात्मने सौरपीठ मभयं भयायुतं ।
स्यान्नमः सहित इष्टदो रवेः पीठमन्त्र उदितोऽतिदुर्ल्लभः ॥ ६८ ॥
अमुं समुद्दिश्य तदीयपीठं प्रकल्प्य मन्त्री हृदयाम्बुजान्तः ।
न्यसे-त्ततो मूलमनोः क्रमेण मुन्यादि-विन्यास मथाङ्गषट्कं ॥ ७० ॥
आकाशवह्निपवनोर्द्ध्वरदान्त्यकर्ण-
खण्डेन्दुमण्डितमिदं रसमात्रमुक्तं ।
मार्त्तण्डवीज मतिभीषणयक्षरक्षो
भूतामयघ्न मखिलार्थसमृद्धिकारि ॥ ७१ ॥
प्रणवो घृणिसूर्य्य आदिशब्दाः पवनारूढहरि मतोऽष्टवर्णः ।
तरणे रथ वह्निदीर्घवत्खं भुवनेशी स इति त्रिवर्णकोऽन्यः ॥ ७२ ॥

---

* द्वादशकलाभिः । † सर्वतोमुखी नवमी सूर्य्यशक्तिः ।

‡ ओं घृणिसूर्य्यादित्याय ।

प्रथमस्तिलकोऽत्रवाञ्छितानामपरोऽसौ तिलक: प्रयोजनानां ।
निजवीजनिरुद्धयो र्दिनेशं ह्यनयो रेकतरेण संयजेत ॥ ७३ ॥
देवभार्ग ऋषि रेतयो र्मत ग्छन्दएव जननी श्रुति: परा ।
देवता निखिलभासको रवि स्त्वात्तरस्य तु हयाङ्गकल्पना ॥ ७४ ॥
सत्यो ब्रह्मा विष्णुरुद्रावथाग्नि:
शर्व्व श्चैते ङेयुताश्चेत् पुरस्तात् ।
तेजोज्वालामय्युपान्तेऽथ हूँ फट्-
स्वाहान्ताश्चेतीतरस्याङ्गमन्त्रा: ॥ ७५ ॥
आदितेयरविभानुभास्करान्नास्य सूर्य्यमहितांश्च पञ्च तान् ।
आस्यहृद्गुदपदेष्वथ क्रमात् पञ्च रुद्रसहितान् स्मरेद् ध्रुवं ॥ ७६ ॥
रक्ताब्जयुग्माभयदानहस्तं केयूरहाराङ्गदकुण्डलाढ्यं ।
माणिक्यमौलिं विलसत्त्रिनेत्रं वन्धूककान्तं दिननाथ मीड़े ॥ ७७ ॥
एवं विचिन्त्योपचितोपचारा-नासाद्य भूय: परिपूज्य पीठं ।
ओँ शङ्खगोल्कायपदेन मूर्त्ति मावाह्य मुद्रां विदधीत सप्त ॥ ७८ ॥
कुञ्जाकृतीकृत्य करौ समन्तादन्योन्य मग्रे ग्रथिताङ्गुलीकौ ।
शून्योदरौ स्वाभिमुखेन तिर्य्यक् कुर्व्वीत चे-द्धोमसमन्त्रमुद्रा ॥ ७९ ॥
पद्माकारावभिमुख्येन पाणी कृत्वाऽङ्गुष्ठौ मध्यत: कर्णिकावत् ।
पद्माख्येयं स्यादसौ मध्यमाध: स्पृष्टाङ्गुष्ठा विम्बमुद्रा तृतीया ॥ ८० ॥
अन्योऽन्यपृष्ठग्रथिताङ्गुलीकौ
संकोच्य हस्तौ शिखराणि तासां ।
निपीड़्य बद्धाऽभिमुखं तलाभ्या-
मङ्गुष्ठबद्धा यदि निष्ठुरा स्यात् ॥ ८१ ॥

अन्योऽन्याभिमुखनिबद्धमुष्टियुग्मं
कृत्वाऽङ्गुष्ठयुग ममुष्य चाभि गुप्तं ।
तर्ज्जन्यावनृजुतया विषाणवच्च
संबध्यात् प्रभवति गोविषाणमुद्रा ॥ ८२ ॥
अन्योऽन्याभिमुखतया नियुज्य पाणी
मध्याग्रेविपरिणियोज्य तर्ज्जनीभ्यां ।
स्वानामाशिखरयुगं कनिष्ठिकाभ्यां
बद्धाऽधःकृतशिखरा हि धेनुमुद्रा ॥ ८३ ॥
दक्षहस्तकृतमुष्टितर्ज्जनी मुक्तिनोर्द्ध्वशिखरा परं प्रति ।
तर्ज्जयन्निव यदि प्रदर्शये-त्रासिनीय मुदिताऽर्कपूजने ॥ ८४ ॥
समेता दर्शयित्वाऽऽसन मथ वितरे द्गन्धपुष्पान्त मस्मै
सत्कुर्य्यात्तत्षडङ्गान्यनलरहवहिर्श्यावृतावग्रिमायां ।
अन्यस्यां दिग्दलस्थान् शशिबुधगुरुकाव्यांशुकोणेषु मन्द-
क्षोणीपुत्राहिकेतून् शित-शित-कनकाच्छारुणश्वेतधूम्रान् ॥ ८५ ॥
वामोरूपरिनिहितात्मवामहस्तान्
ध्यायेत्ता-न भय-समुद्यतान्यहस्तान् ।
स्रग्भूषारुचिररुचीं स्वयोग्यदंष्ट्रा-
नन्त्या स्वोहृदिनिहिताञ्जलिं च राहुं ॥ ८६ ॥
तत्परावरणदिक्षु पूजयेदादितेयरविभानुभास्करान् ।
स्वस्वदिक्षु दिगधीश्वरान्बहिस्तद्बहिर्दिगधिपायुधान्यपि ॥ ८७ ॥
घण्टाध्वानैर्धूपदीपौ निवेद्य संतर्प्यामुं भूरिनैवेद्यदानैः ।
तेजश्चण्डंपूजयेत्तस्य शेषे नीराज्यामुं वर्त्तिभिः सर्पिरिद्धैः ॥ ८८ ॥

प्रतिपूज्य सूर्य्य मथ तत्र पुन: प्रणिधाय ताम्ररुचिरं चषकं ।
जलजाङ्कितं पृथुसुवृत्त मथोपलषोड़शाम्बुकलनार्हततं ॥ ८८ ॥
वर्ण्णै र्विलोमपठितै: क्रमतो मनूत्थै:
संपूज्य शुद्धसलिलै: परिकल्प्य पद्मं ।
निक्षिप्य गन्धकुसुमाक्षत मत्र सूर्य्य-
विम्वानुविम्वपतनेन विभाव्य चक्रं ॥ ८० ॥
इष्ट्वा दिनेश मिह पीठगतं तथैव
व्योम्नि स्थितं परिवृतावरणं विलोक्य ।
अष्टोत्तरंशत मथो प्रजपे न्मनुं तत्
पूर्ण्णोदकं निशि करेण पिधाय पात्रं ॥ ८१ ॥
अथार्घपात्रं दशधा यदुक्तं ततोऽधिकौ स्त: खलु ताम्रशङ्खौ ।
तयोस्तु शृङ्गोऽप्यधिकं प्रशस्तो यथात्मलब्धं कलयेत् पुरस्तात् ॥ ८२ ॥
संपूर्य्य पानीयपलै स्त्रिभिस्तु मन्त्रेण वा मातृकया मनुज्ञ: ।
क्षिपे त्तदन्त: प्रणवेन रुद्धे मन्त्राक्षरे र्गोभवरोचनाद्यं ॥ ८३ ॥
गोरोचना-सतिलवेणव राजिरक्त-
शीताज्यशालिकरवीर-जवाकुशाग्रान् ।
शामाक तण्डुलयुतांश्च यथात्मलब्धान्
संयोज्य भक्तिभरतोऽर्घविधिं विधाय ॥ ८४ ॥
भूयोऽभ्यर्च्य सुधामयं जल मथो सद्गन्धपुष्पादिभि
र्जानुभ्यां मवनिंगत श्चषक मप्यामस्तकं प्रोद्वहन् ।
दद्या न्मण्डलबद्धदृष्टिहृदयं तत्रार्घ मोजोज्वलं
ज्योति र्दीप्तियशोधृति-स्मृतिकरं लक्ष्मीकरं भास्वते ॥ ८५ ॥

अमृतमयजलाविसिक्तदेहो दिनपति रप्यमृतत्व मातनोति ।
धनपतिवहुदारपुत्रमित्रं पशुगणतुष्ट मनन्तभोगयोगं ॥ ९६ ॥

तस्मादिनाय ददतां दिनशो दिनादौ
दैत्यापनोदितनवे दिनवल्लभाय ।
अर्घ्यं समग्रविभव स्त्वयमर्कवारि *
पारं स गच्छति भवाभिध-वारिराशेः ॥ ९७ ॥

परिक्रम्य तन्मण्डलं सप्तकृत्वः
समुद्वास्य तं मण्डले वा हृदब्जे ।
स्तवैः संस्तुवन् भक्ति-नम्रात्ममूर्त्ति
विदध्या-न्नमोऽष्टाङ्गपातेन भूयः ॥ ९८ ॥

नमः सवित्रे जगदेककर्त्रे क्रतुस्वरूपाय समस्तभर्त्रे ।
त्रयीविदेवीत्रिगुणात्मकाय ज्ञानप्रदात्रे तिमिरापहर्त्रे ॥ ९९ ॥

एवं कुर्य्यात्साय मर्घस्य दानं प्रागुक्ते तन्मण्डले मन्त्रिवर्य्यः ।
सोऽङ्गी स्या-च्चेत्तं त्रिकालं प्रपूज्य प्रत्यर्चान्ते संददीतार्घ मस्मै ॥१००॥

इति श्रीगोविन्दकविभूषणसामन्तरायविरचिते सूरिसर्व्वस्वे प्रातःकृत्ये सूर्य्यार्चनविधिर्नाम त्रिंशःसंग्रहः ॥ ० ० ॥

---

* "त्वथवार्कवारे" इति भवितुमर्हति ।

## एकविंश: संग्रह: ।

अथ प्रसङ्गा मनुनाऽमुनैव वच्ये प्रयोगान्तर मागमोक्तं ।
सर्व्वग्रहक्षोभकृतामयघ्नं व्यूहार्च्चनं चाप्यखिलार्थदायि ॥ १ ॥
कृत्वा सगण्डल मष्टपत्रलमितं तत्कर्णिकायां तथा
पत्राग्रेषु निधाय कुम्भनवकं तत् पूरयित्वा जलै: ।
आवाह्य क्रमशो ग्रहा न्नव समाराध्याभिषेकक्रियां
कुर्य्याद् यो * ग्रहवैकृतानि विलयं गच्छन्ति लक्ष्मी र्भवेत् ॥ २ ॥
ग्रहपरिमित मिष्ट्वा पूर्व्वकृत्या दिनेशं
ग्रहनिजभदशानां वैकृते यो जुहोति ।
शुभमति रुपरागे चन्द्रभान्वो: शुभे वा
रिपुनृपजभये वा घोररूपे गदे वा ॥ ३ ॥
अर्कद्विजांघ्रिपसरू रकपिप्पलाश्च
सोदुम्बरा: खदिरशम्यभिधाश्च दुर्व्वा: ।
दर्भाह्वया श्च समिधोऽष्टशतं क्रमेण
मूलाग्रयो र्घृतयुता: पृथगेव ता: स्यु: ॥ ४ ॥
सोमादीनां दिशिदिशि तथाऽऽधाय वह्निं यथाव-
द्धोमे सम्यक्कृतवति मुदं यान्ति सर्व्वे ग्रहा स्ते ।
युद्धे सम्यक्जय मपि रुज: शान्ति मायु श्च पूर्णं
कृत्वा शान्तिं व्रजति पुन रेकत्र वा सर्व्वहोम: ॥ ५ ॥

---

* "गोग्रहवैकृतानि" इति ( ग. घ ) पुस्तकयो: पाठ: ।

अमुनाविधिना हुतार्च्चनाद्यैः प्रभजेद् यो मनुजोऽनिशं दिनेशं ।
मणिभिश्च धनैश्च भूरिधान्यैः परिपूर्णावसथो भवे-च्चिरायुः ॥ ६ ॥
भानोः केचित् कुर्व्वते व्यूहपूजां मासं मासं चैत्रमारभ्य यत्नात् ।
तत्राङ्गानि स्युः पुनः सप्त सप्त प्रत्येकं तानाहु रेवं मुनीन्द्राः ॥ ७ ॥
सूर्य्यो गन्धर्वोऽप्सरा राक्षसर्षी यक्षो नाग श्चैकशो मासि मासि ।
सप्त व्यूहा श्चोदयन्ते नभोऽन्त नृ्णां योगक्षेमनिर्व्वाहणाय ॥ ८ ॥
सूर्य्यो वासरकृ-त्तदग्रगनटो स्यादप्सरा, गायनो
गन्धर्वः, करसंघसंग्रहकरो यक्षो, मुनि स्तावकः ।
रक्षो रक्षति सर्व्वतो रथवरं नागो वहत्यन्वहं
प्रत्येकं कथयामि तानथ पृथग्व्यूहान् क्रमा न्नामभिः ॥ ९ ॥
मधौ धाता सूर्य्यः समुदयति यक्षश्च रथकृत्
पुलस्त्योनामर्षि र्भवति रथवाड् वासुकि रहिः ।
क्रतुस्थल्या नव्या नटसहचर स्तुम्बुरु रमून्
सदारक्षो रक्षद्दसति किल हेति र्गतभयं ॥ १० ॥
स्यादर्य्यमा रवि रथो पुलहो मुनिःस्या-
द्रक्षः प्रहेतिरिति यक्षवर स्तथौजाः ।
पुञ्जस्थली नटति गानपरः सुरर्षिः
स्यात् कच्छनीर इति माधवमासि नागः ॥ ११ ॥
मित्रः सुर्य्यो ऽत्रिरिति ऋषिराड्राक्षसः पौरुषेयो,
हाहा गन्धर्व्वसहचरता मप्सरा मेनकेति ।
यक्षः ख्यातः खलु रथरव स्तक्षको नागराजो
ज्येष्ठे मासि प्रभवति गणः सप्तकः सप्तसप्तेः ॥ १२ ॥

सूर्य्य: स्या-द्वरुणो वशिष्ठऋषि-राड्रम्भाऽप्सरा नर्त्तकी
गन्धर्वश्च हुहूस्तु शुक्र उरग श्चित्रस्वनो राक्षस: ।
यक्ष: स्यात् सहजन्य इत्यभिहितो व्यूहा इमे स्यु: शुचौ
वक्ष्ये श्रावणमासयथ प्रभवतो व्यूहान् सहस्रार्च्चिष: ॥ १३ ॥
सूर्य्योऽंशु विश्वावसु र्गानशिल्प:
प्रम्लोचाख्या ह्यप्सरा, नागराज: ।
एलापत्रो, राक्षसो धर्म्मनामा
श्रोता यक्षो विप्रवर्य्योऽङ्गिरा स्यात् ॥ १४ ॥
भगोनाम सूर्य्यो भवेदुग्रसेनो
ऽथ गन्धर्व्व आमोरणो यक्षराज: ।
अनुम्लोचिका नर्त्यहि: शङ्खपालोऽ-
सुरो व्याघ्र, आर्य्यो भृगु: स्या न्नभस्ये ॥ १५ ॥
सूर्य्यो विवस्वदभिधो जमदग्नि रार्य्य:
स्यात्कम्बलाश्च उरगोऽथ तिलोत्तमा स्त्री ।
यक्ष स्तथैव शतजि द्धृतराष्ट्रपाता
ब्रह्मापर्यतइति राक्षस आश्विने स्यात् ॥ १६ ॥
इन्द्राभिधो दिनकरोऽश्वतरोऽहिराजो
रम्भाऽप्सरा स्तदनु गायति सूर्य्यवर्च्चा: ।
विश्वादिमित्र ऋषिरेव मखापेतो
रक्षोऽथ यक्ष इति सत्यजिदूर्ज्जमासे ॥ १७ ॥
पूषा सूर्य्य: कश्यपो विप्रवर्य्य स्तार्क्ष्यो यक्षो राक्षसो विद्युच्छत्रु: ।
नर्त्योर्व्वश्या गायन श्चित्रसेनो मार्गे नाग: स्या न्महाशङ्खनामा ॥ १८ ॥

पर्ज्जन्यो दिनकृदथो अरिष्टनेमि

गन्धर्व्वोऽप्सरसिवराऽथ पूर्व्वचित्तिः ।

कर्कोटोप्यहि ऋषि रायुरेव पौषे-

स्फुर्जाख्योऽप उत यत्त ऊर्णनामा ॥ १८ ॥

त्वष्टा भवेद्दिनकरोऽथ नटी घृताची

गाता सुषेण उदितोऽथ धनञ्जयोऽहिः ।

वातस्तु राक्षस ऋषिः खलु गोतमाख्यो

यक्षाधिपश्च सुरुचिः खलु माघमासे ॥ २० ॥

विष्णुः सूर्य्यः श्येनचित्राप्सरा स्या-द्विख्या गन्धर्व्वः क्रतु र्यक्षराजः ।

वर्च्चा रक्षो नाग ऐरावताख्यो भारद्वाजो विप्रवर्य्य स्तपस्ये ॥ २१ ॥

केचिन्मार्गादिष्विमां व्यूहपूजां

कुर्व्वन्त्यार्य्याः केशवाद्य-द्विषड्भिः ।

संयोज्यादौ मूर्त्तिभि स्ते लभन्ते

कीर्त्तिं कान्तिं कार्त्तिकान्ते समाप्य ॥ २२ ॥

अथाङ्गदेवतार्च्चनं प्रसङ्गतो यदीरितं

तदत्र कथ्यते पुनः सशक्तिमन्त्रविस्तरैः ।

विशेषतोऽङ्गिनोऽर्च्चनं यथाङ्गिनाऽत्र वक्ष्यते

दिशैव दर्श्यते तदङ्गदेवसेवनाऽध्वनः ॥ २३ ॥

उक्तं सूर्य्यार्च्चनं पूर्व मन्येषां पूजनक्रमः

कथ्यते शिवहेरम्बदुर्गाणां यत्नपूर्वकं ॥ २४ ॥

हृदयं वपरः सदक्षिणाक्षि र्वरुणोऽनन्तयुतो मरुत्शरार्णः ।

प्रणवाग्रसरः षडक्षरः स्यान्मनुयुग्म' प्रिय मेतदन्धकारेः ॥ २५ ॥

वामदेव ऋषि रेतयो मतः च्छन्दएव खलु पंक्ति रीरिता।
देवताऽमरवरो महेश्वरो मन्त्रवर्णकलिताऽङ्गकल्पना॥ २६॥
प्रासादस्य वहिः षडंघ्रिषु लमत्तारवयस्वाचरं
रन्ध्रस्वार्णयुतं च पञ्चदलगेशानादिहृड्ङेऽन्तवत्।
अष्टाब्जं स्वरयुग्मकेशरयुतं पत्राष्टवर्गान्वितं
यन्त्रं शैव मिदं षड़क्षरमनो स्त्र्यम्बकावेष्टितं॥ २७॥
ध्याये-न्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नं।
पद्मासीनं समन्तात् स्तुत ममरगणै र्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रं॥ २८॥
एवं ध्यात्वाऽऽराध्य तत्शक्तियुक्तं पीठं तस्मिन् कल्पिते पीठमध्ये।
आवाह्य प्रासादवीजेन मूर्त्तिं सान्तः सद्यान्तेन्दुयुग्वीज मेतत्॥ २९॥
वामा ज्येष्ठा रौद्री काली कलबलपूर्वे अथ विकिरिण्यौ।
प्रमथिन्यन्ता बलपदयुक्ता भूतदमन्यथ सर्वसमेता॥ ३०॥
मनोन्मनी चेति नवास्य शक्तयः
शिवस्य पीठाम्बुजपत्रमध्यगाः।
प्रपूजनीया अथ कर्णिकोपरि
स्मर्य्यः पुनः पीठमनुः स्मरद्विपः॥ ३१॥
ध्रुवहृदयभगामृतान्तत स्ते सकलगुणात्मकशक्तियुक्तमाय।
अयमहित मनन्तयोगपीठात्मपदयुगं नति रेष पीठमन्त्रः॥ ३२॥
पञ्चोपचारैः परिपूज्य देवं चण्डेश्वरं चापि तदीयशेषैः।
नीराज्य साष्टाङ्गमथ-प्रणामं विधाय भक्तिप्रवणः स्तुवीत॥ ३३॥

पश्चान्तको बालशशाङ्कभूषितो
नमो ध्रुवाभ्यन्तरगो गणेशितुः।
मनुश्चतुर्वर्ण उदाहृतः पर-
श्चतुर्लिपिः स्यात् सच वाम कर्णयुक् * ॥ ३४ ॥
गणकनिवृदिभेन्द्रमुख्यैः क्रमात्तदुभयोश्च मुनिप्रभृतीन्न्यसेत्।
सलवदीर्घयुजा खलु शार्ङ्गिणा भवति जातियुताऽङ्गविकल्पना ॥३५॥
बीजोद्यत्कर्णिकान्तानलनिलयवह्नि स्तारहार्द्दि † त्रिकोणं
मन्त्रार्णैः श्रीतपोर्व्वीमनसिज-मनुभि र्वीतदिक्कोणपत्रं।
वृत्ते वीतं त्रिभि स्तत्कथितमिति महाविघ्नराजस्य यन्त्रं
ध्याये-न्मन्त्री तदन्त स्त्रिजगदभिमतार्थप्रदं विघ्नराजं ॥ ३६ ॥
सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मे दधानं
दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्बीजपूराभिरामं।
बालेन्दुद्योतिमौलिं करिपतिवदनं दानपूरार्द्रगण्डं
भोगीन्द्राबद्धभूषं स्मरतु गणपतिं रक्तवस्त्राङ्गरागं ॥ ३७ ॥
तीव्राख्या ज्वालिनी नन्दा भोगदा कामरूपिणी।
उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी ॥ ३८ ॥
सर्वशक्तिकमलासनं वदेङ्डेयुतं च हृदयं ध्रुवादिकं।
पीठमन्त्र उदितो गणेशितुः पीठशक्त्युपरि तं ततो न्यसेत् ॥ ३९ ॥
आवाह्य संपूज्य तथोपचारै र्गणाधिनाथं प्रणिपत्य भूयः।
कुण्डोदरं चापि तदीयशेषैः संतोष्य चार्च्चे त्तरणिं पुरोवत् ॥ ४० ॥

* दन्तकर्णयुक् इति (ख) (घ) पुस्तकयोः।
† "तारहार्दि" इति (ग) पुस्तके पाठः।

भति दक्षिणकर्णचन्द्रकयुतो बीजं हि दौर्गं युतं
दुर्गायै हृदयं षडङ्ग उदित स्तारत्वपि हेऽपरः।
अष्टार्णोऽद्रिभुव स्तयोः सुरमुनी गायत्र्यमा चेत्यमू
मन्त्राद्या स्तदुमा क्रियाऽङ्करुजना षड्दोर्घभाजा मता ॥ ४१ ॥
मध्येतारं बीज मध्यस्थ-साध्यं पत्रेष्वष्टौ मन्त्रवर्णान् विलिख्य।
त्रिष्टुब्बीतं वेष्टितं मातृकार्णैं दौर्गं यन्त्रं भूपुरस्थं विदध्यात् ॥ ४२ ॥
सिंहस्था शशिशेखरा मरकतप्रख्या चतुर्भि र्भुजैः,
शङ्खं चक्रधनुः शरां श्च दधती नेत्रै स्त्रिभिः शोभिता।
आमुक्ताङ्गदहारकङ्कण-रणत्काञ्चीक्वणन्नूपुरा,
दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुण्डला ॥ ४३ ॥
प्रभा च माया च जया च सूक्ष्मा ततो विशुद्धा खलु नन्दिनी च।
स्यात् सुप्रभाऽथो विजया च सर्वसिद्धिप्रदाऽस्या नवशक्तयः स्युः ॥४४॥
अक्लीव-ह्रस्वत्रितयै रुपेताः स्वरै र्न्यसे-त्ताः शकलेन्दुयुक्तैः।
मध्ये तथा तामरमच्छदेषु स्मरे-दिमां पीठमनो तदन्तः ॥ ४५ ॥
ध्रुवं वज्रनान्ते खदंष्ट्राय चोक्त्वा
महापूर्व सिंहाय हूँफण्णमोऽन्तः।
मतः सिंहमन्त्र स्तत स्तेन मन्त्री
समावाह्य देवीं यथावद् यजेत ॥ ४६ ॥
मातङ्गिनीं तदवशिष्टनिवेद्यजातैः
संपूज्य संस्तुतिभि रद्रिसुतां प्रसाद्य।
प्रासादपूर्वदिगवस्थितपीठपद्मे
तद्वाहनं मलयजादिभि रर्चयेच्च ॥ ४७ ॥

पक्षिराजपदमो पुरःसरं ङेनमोऽन्त इति गारुड़ो मनुः ।
गालवो मुनि रनुष्टुबुच्यते च्छन्द एव गरुड़ोऽस्य देवता ॥ ४८ ॥

नागै रष्टभि रुत्तमाङ्गभुजपाणिश्रोत्रयुग्मोरसा
माकल्पं परिकल्प्य दिव्यवसनस्रक्चन्दनै रर्च्चितः ।
वक्त्रे कुन्दनिभोऽथ कुङ्कुमनिभो देहे, गरुन्निर्गलत्-
सामध्यानमनोहरः खगवरः पायादुदग्रोन्नसः * ॥ ४९ ॥

एवं ध्यात्वा पूजयित्वोपचारै र्देवाग्रस्थं मन्त्रवीरासनस्थं
वक्षोदेशे बद्धहस्तं समस्तप्रत्यूहानां शान्तये प्रार्थयेत्तं ॥ ५० ॥

यो विश्वत्राणहेतु स्तनु रपिच हरे र्यानकेतुस्वरूपो
यं संचिन्त्यैव सद्यः स्वय मुरगवधूवर्गगर्भाः पतन्ति ।
चञ्चच्चण्डोरुतुण्डत्रुटितफणिवसारक्तपङ्काङ्कितास्यं
वन्दे च्छन्दोमयं तं खगपति ममलं स्वर्णवर्णं सुपर्णं ॥ ५१ ॥

शैवो वृषं केशरिणं च शाक्तः सौरोऽरुणं गाणप आखुराजं ।
यद् यस्य तद्वाहन मर्च्चयित्वा दौवारिकान् द्वार्षु यजेत् क्रमेण ॥ ५२ ॥

प्राग्द्वारशाखाद्वितये मुरारे र्याम्योत्तरादिक्रमतो यजेत ।
जयं च दक्षे विजयं च वामे व्यूढावुभौ स्वानपि वारयन्तौ ॥ ५३ ॥

प्रचण्डचण्डौ च तदग्रसंस्था वाज्ञावहावीशितु रुग्रमूर्त्ती ।
तत्पार्श्वगौ धातृविधातृसंज्ञौ प्रवेशकौ द्रष्टु मुपागतानां ॥ ५४ ॥

शाखाधस्तात् पीठयुग्मे तथैव देवीं गङ्गां तां पतङ्गात्मजां † च ।
न्यस्योर्द्ध्वस्ता-न्मध्यतः सिन्धु-कन्यां तत्पार्श्वस्थौ पद्मशङ्खौ निधी द्वौ ॥५५॥

---

* पायादुदग्रोनस इति ( ग) पुस्तके ।   † यमुनां ।

| | Rs. | A. |
|---|---|---|
| * Granta Sutra of Cankhayana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4; Vol. 4, Fasc. 1, at As. 10 each ... ... ... ... ... | 10 | 0 |
| Cri Bhashyam, Fasc. 1-3, at As. 10 each ... ... | 1 | 14 |
| Dana Kriya Kaumudi, Fasc. 1-2, at As. 10 each ... ... | 1 | 4 |
| Gadadhara Paddhati Kalasara, Vol. 1, Fasc, 1-7, at As. 10 each | 4 | 6 |
| Ditto Acarasara, Vol. II, Fasc. 1-4 ... | 3 | 2 |
| Gobhiliya Grhya Sutra, Vol, I, at As. 10 each ... ... | 3 | 2 |
| Ditto Vol. II, Fasc, 1-2, at Re. 1-4 each ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... | 0 | 10 |
| Haralata ... ... ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. 1 ... ... ... ... | 1 | 4 |
| Kala Viveka, Fasc. 1-7, at As. 10 each ... ... | 4 | 6 |
| Katantra, Fasc. 1-6, at As. 12 each ... ... ... | 4 | 8 |
| Kavi Kalpa Lata, Fasc. 1 ... ... ... | 0 | 10 |
| Kavindravacana Samuccayah ... ... ... | 3 | 8 |
| Kurma Purana, Fasc, 1-9, at As. 10 each ... ... | 5 | 10 |
| Kiranavali, Fasc. 1-3, at As. 10 ... ... ... | 1 | 14 |
| Madana Parijata, Fasc. 1-11, at As. 10 each ... ... | 6 | 14 |
| Maha-bhasya-pradipodyota, Vol. I, Fasc. 1-9; Vol, II, Fasc. 1-12; Vol. III, Fasc. 1-10, at As. 10 each ... ... | 19 | 6 |
| Ditto Vol. IV, Fasc. 1-3, at Re. 1-4 each ... | 3 | 12 |
| Maitra, or Maitravaniya Upanishad, Fasc. 1 ... ... | 0 | 10 |
| Manutika Sangraha, Fasc, 1-3, at As. 10 each ... ... | 1 | 14 |
| Markandeya Purana, (English) Fasc. 1-9, at Re. 1 each ... | 9 | 0 |
| Mugdhabodha Vyakarana Vol. I, Fasc. 1-7, at As. 10 each ... | 4 | 6 |
| Nirukta, (2nd edition) Vol. I, Fasc. 1-2 at Re. 1-4... ... | 2 | 8 |
| Nityacarapaddhati, Fasc. 1-7, at As. 10 each ... ... | 4 | 6 |
| Nityacarapradipa, Vol. I, Fasc. 1-8, Vol. II, Fasc. 1-4, at As. 10 each ... ... ... ... ... | 7 | 8 |
| Nyayabindutika, Fasc. 1, at As. 10 each ... ... | 0 | 10 |
| Nyaya Vartika Tatparya Parisudhi, Fasc. 1-4, at As. 10 each | 2 | 8 |
| Nyayasarah, ... ... ... | 2 | 0 |
| Padumawati, Fasc. 1-6, at Rs. 2 each ... ... ... | 12 | 0 |
| Prakrita-Paingalam, Fasc. 1-7 at As. 10 each ... ... | 4 | 6 |
| * Paracara Smrti, Vol. I, Fasc. 2-8, Vol. II, Fasc. 1-6; Vol. III Fasc. 1-6, at As. 10 each ... ... ... | 11 | 14 |
| Paracara, Institutes of (English) at Re. 1 each ... ... | 1 | 0 |
| Pariksamukha Sutram ... ... ... ... | 1 | 0 |
| Prabandhacintamani (English) Fasc. 1-3 at Re. 1-4 each ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 ... ... ... ... | 3 | 12 |
| Ravisiddhanta Manjari, Fasc. 1 ... ... ... | 0 | 10 |
| Sadukti-karma-mrita, Fasc. 1-2, at As. 10 each ... | 1 | 4 |
| Saddarsana-Samuccaya, Fasc. 1-2, at As. 10 each ... | 1 | 4 |
| Samaraicca Kaha, Fasc. 1-7, at As. 10 each ... ... | 4 | 6 |
| Sankhya Sutra Vrtti, Fasc. 1-4, at As. 10 each ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3, at Re. 1 each ... | 3 | 0 |
| Six Buddhist Nyaya Tracts ... ... ... | 0 | 10 |
| Siva Parinahya ... ... ... ... | | |
| Smriti Prakasha, Fasc. 1 ... ... ... ... | 0 | 10 |
| Sraddha Kriya Kaumudi, Fasc. 1-6 at As. 10 each ... | 3 | 12 |
| Sri Surisarvasvam Fasc. 1-2, at As. 10 each ... | 1 | 4 |
| Sucruta Samhita, (English) Fasc. 1, at Re 1 each ... | 1 | 0 |
| Suddhi Kaumudi, Fasc. 1-4. at As. 10 each ... ... | 2 | 8 |
| Sundaranandam Kavyam ... ... ... ... | 1 | 0 |
| Suryya Siddhanta, Fasc. 1-2, at Re 1-4 each ... ... | 2 | 8 |
| Syainika Sastra... ... ... ... ... | 1 | 0 |

| | Rs. | As. |
|---|---|---|
| Tantra Vartika (English) Fasc. 1-14, at Re. 1-4 ... | [illegible] | [illegible] |
| Tattva Cintamani, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-10; Vol. III, Fasc. 1-2: Vol. IV, Fasc. 1; Vol. V, Fasc. 1-5; Part IV, Vol. II, Fasc. 1-12, at As. 10 each ... | 23 | [illegible] |
| Tattva Cintamani Didhiti Viviriti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-3, Vol. III, Fasc 1, at As. 10 each ... | 7 | [illegible] |
| Tattva Cintamani Didhiti Prakas, Fasc. 1-6; at As. 10 each | 3 | [illegible] |
| Tirthacintamoni, Fasc. 1-4, at As. 10 each ... ... | 2 | [illegible] |
| Trikanda Mandanam, Fasc. 1-3, at As. 10 each ... ... | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5, at As. 10 each ... ... | 3 | 2 |
| Upamita-bhava-prapafica-katha, Fasc. 1-2, 5-13, at As. 10 each ... ... ... ... ... | 6 | [illegible] |
| Uvasagadasao, (Text and English) Fasc. 1-6, at Re. 1 ... | 6 | [illegible] |
| Vallala Carita, Fasc. 1, at As. 10 ... ... ... | 0 | 10 |
| Varsa Kriya Kaumudi, Fasc. 1-6, at As. 10 ... ... | 3 | 12 |
| Vidhana Parijata, Fasc. 1-8; Vol. II, Fasc, 1 at As. 10 ... | 5 | 10 |
| Ditto Vol. II, Fasc. 2-6, at Re. 1-4 ... | 6 | 4 |
| [illegible]habitan Fasc. 1 ... ... ... | 0 | 10 |
| Vivadaratnakara, Fasc. 1-7 at As. 10 each ... ... | 4 | 6 |
| Vrhat Svayambhu Purana, Fasc. 1-6 at As. 10 ... ... | 3 | 12 |
| Yogasastra, Fasc. 1-3 ... ... ... ... | 3 | 12 |

*Tibetan Series.*

| | Rs. | As. |
|---|---|---|
| Amarakosah ... ... ... ... | 2 | 0 |
| Amartika Kamdhenuh ... ... ... ... | 1 | 0 |
| Bauddhastotrasangraha, Vol. 1 ... ... ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4, at Re. 1 each ... ... ... | 4 | 0 |
| Nyayabindu of Dharmakirti Fasc. 1-2... ... ... | 2 | 0 |
| Pag-Sam S'hi Tin, Fasc. 1-4 at Re. 1 each ... ... | 4 | 0 |
| Rtogs *brjod d*pag *h*khri S'in (Tib. & Sans. Avadana Kalpalata) Vol. I, Fasc. 1-11, Vol. II, Fasc. 1-11 at Re. 1 each... | 22 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc 1-3; Vol. III, Fasc 1-6 at Re. 1 each ... ... ... | 14 | 0 |
| [illegible]med-Kun-Din ... ... ... | 1 | 0 |

*Arabic and Persian Series.*

| | Rs. | As. |
|---|---|---|
| Amal-i-Salih, or Shah Jahan Namah ... ... | 2 | 0 |
| Al-Muqaddasi (English) Vol. 1, Fasc. 1-4 at Re. 1 ... | 4 | 0 |
| Ain-i-Akbari, Fasc, 1-22 at Rs. 1-8 each ... | 33 | 0 |
| Ditto (English) Vol. II, Fasc. 1-5, Vol, III, Fasc. 1-5, Index to Vol. II, at Rs. 2 each ... | 22 | 0 |
| Akbarnamah, with Index, Fasc. 1-37 at Re. 1-8 each ... | 55 | 8 |
| Akbarnamah, English Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-7; Vol. III, Fasc. 1-6, at Re. 1-4 each ... | 26 | 4 |
| Conquest of Syria, Fasc. 1-9 at As. 10 each ... ... | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts 1-2 at Re. 1 each ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts Fasc. 1-3, at Rs. 1 each ... ... ... | 3 | 0 |
| Faras Nama, of Hashini ... ... ... ... | 1 | [illegible] |
| Ditto of Zabardast Khan ... ... ... | 1 | [illegible] |
| Farhang-i-Rashidi, Fasc. 1-14 at Re. 1-8 each ... ... | 21 | [illegible] |
| Fihrist-i-Tusi, or Tusy's list of Shy'ah Books, Fasc. 1-4 at Re. 1 each ... ... ... ... | 4 | 0 |

| | | A. |
|---|---|---|
| Gulriz ... ... ... | | |
| Hadiqatu'L Haqiqat, (Text & Eng. ... ... | 2 | 0 |
| History of Gujarat ... ... | 3 | 8 |
| Haft Asman, History of the Persian Masnawi, Fasc. 1 at ... ... ... | 1 | 0 |
| As. 12 each ... ... ... | | |
| History of the Caliphs, (English Fasc. 1-6 at Re. 1-4 each ... | 9 | 12 |
| Iqalnamah-i-Jahangiri, Fasc. 1-3 at As. 10 each ... ... | 7 | 8 |
| Isabah, with Supplement, 51 Fasc. at 1 Re. each ... ... | 1 | 14 |
| Kashf al-Hujub wal Astar ... | 51 | 0 |
| List of Arabic and Persian MMS 1903-1907 and 1908-1910 ... ... — | 2 | 0 |
| at Re. 1 each | | |
| Ma'asir-i-Rahimi, Part I, Fasc. 1-4 at Rs. 2 each ... ... ... ... | 2 | 0 |
| Maasir-ul-Umara, Vol. 1, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. III, Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 at Re 1 each ... | 8 | 0 |
| Ditto (Eng). Vol. I, Fasc. 1-6, at Re. 1-4 each ... | 35 | 0 |
| Memoirs of Tahmasp ... ... | 7 | 8 |
| Marhamu'L-Ilali 'L-Mu'dila, Fasc. 1-2 ... ... | 1 | 0 |
| Muntakhabu-t-Tawarikh, Fasc. 1-11 at As. 10 each ... ... | 2 | 0 |
| Ditto English, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 2 at Re. 1 each ... ... | 9 | 6 |
| Muntakhabu-l-Lubab, Fasc. 1-19 at As. 10 each ... ... | 17 | 0 |
| Ditto Part 3, Fasc. 1-4 at Re. 1 each ... | 11 | 14 |
| Persian and Turki Divans of Bayran Khan, Khan Khanan ... | 4 | 0 |
| Qawaninu's-Sayyad of Khuda Yar Khan 'Abbasi, edited in | 1 | 0 |
| the original Persian with English notes ... ... | 5 | 0 |
| Riyazu-s-Salatin, Fasc. 1-5 at As. 10 each ... ... | 3 | 2 |
| Ditto (English) Fasc. 1-5 at Re. 1 ... | 5 | 0 |
| Shah Alam Nama Fasc. 1-2 ... ... ... | 2 | 0 |
| Tadhkira-i-Khushnavisan ... ... ... | 1 | 0 |
| Tubaquat-i-Nasiri (English), Fasc. 1-14 and Index at Re. 1 each ... ... ... | 14 | 0 |
| Tarikh-i-Firuz Shahi of Ziyau-d-din Barni, Fasc. 1-7 at As. 10 each ... ... ... ... | 4 | 6 |
| Tarikh-i-Firuzshahi, of Shams-i-Siraj Aif, Fasc. 1-6 at As. 10 each ... ... ... ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1-2 at Re. 1-8 each ... | 3 | 0 |
| The Mabani'L Lughat A Grammar of the Turki Language in Persian ... ... ... ... | 1 | 8 |
| Tuzuk-i-Jahangiri (English) Fasc. 1 at Re. 1 ... ... | 1 | 0 |
| Wis o Ramin, Fasc. 1-5 at As. 10 each ... ... | 3 | 2 |
| Zafarnamah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 at As. 10 each ... ... ... ... ... | 10 | 10 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

## ASIATIC SOCIETY'S PUBLICATIONS

| | | Rs. | A. |
|---|---|---|---|
| 1. | ASIATIC RESEARCHES. Vol. XX at Rs 10 each ... | 10 | 0 |
| 2. | PROCEEDINGS of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) at As. 8 per No. | | |
| 3. | JOURNAL of the Asiatic Society for 187- (8), 1871 (-), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (-), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (-), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (-), 1901 (7), 1902 (9), 1903 (8), 1904 (16) at Re 1-8 per No to Members and at Rs. 2 per No. to Non-Members. | | |

N. B.—*The figures enclosed in brackets give the number of* N-, *in each year.*

| | | Rs. | A. |
|---|---|---|---|
| 4. | Journal and Proceedings. N. S., (Nos. 1-4 of 1905 are out of stock), 1905-1912 at Re 1-8 per No. to Members and Rs. 2 per No. to Non-members. | | |
| 5. | Memoirs, Vol. I (21), Vol. II (11), Vol. III (6), Vol. IV (1). Price varies from number to nvmber. Discount of 25 per cent to Members. | | |
| 6. | Centenary Review of the Researches of the Society from 1784-1883 ... ... ... | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society Bengal, 1910 ... ... ... ... | 8 | 0 |
| 8. | Moore and Hewitson's Descriptions of New Indian Lepidopetra, Parts I-III, with 8 coloured Plates, 4 to at Rs. 6 each ... ... ... | 18 | 0 |
| 9. | Kacmiracabdamrta, Parts I and II at Re 1-8 ... | 3 | 0 |
| 10. | Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmadi-Kirmasi, and edited with notes | 1 | |
| 11. | A sketch of Turki language as spoken in Eastern Turkistan (Extra No. J.A.S.B. 1878) ... ... | 4 | 0 |
| 12. | Materials for a Flora of the Malayan Peninsula, Nos. 16, 17, 18 Vol. 74, Part I, J.A.S.B 1905) ... ... | 4 | 0 |
| 13. | Do. No. 19 (Vol. 74, Part 2, J.A.S.B. 1908) | | 0 |
| 14. | Index to Punjab Notes and Quaries, Indian and North Indian Notes and Quaries (Extra No. J.A.S.B. 1908) | | |
| 15. | A Grammar and Dictionary of the Kanawari Language (Extra No. J.A.S.B. 1909) ... ... | 3 | 0 |
| 16. | Introduction to the Maithili D... of the Bihari Language as spoken in North Behar (Extra No. 2 J.A.S.B. 1909) ... ... ... | 5 | 0 |
| 17. | Index to Rare Mughal Coins noticed in the Numismatic Supplement Nos. 1-15 ... .. ... | 0 | 4 |
| 18. | Numismatic Supplement No. 16-17 at As. 8 each ... | 1 | 0 |
| 19. | Do. No. 18 ... ... | 1 | 0 |
| 20. | Tibetan Studies Being a reprint of the articles contributed to the J.A.S.B. by Alexander Csoma de Koros... | 2 | 0 |
| 21. | Catalogue of Inscriptions on Copper-plates ... | 0 | 8 |

| | Rs. | A. |
|---|---|---|
| Notice of Sanskrit Manuscripts, Fasc. 1-35 at Re. 1 each ... ... ... ... | 35 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... ... ... ... | 5 | 0 |
| Report on the Search of Sanskrit MSS., 1895-1900, 1901-1905, and 1906-1911, at As. 8 each ... ... | 1 | 8 |

N.B.—All cheques, Money Orders, &c., must be made payable to the 'Treasurer, Asiatic Society," only.

**Books are supplied by V.P.P.**